N] भर्त्रा[1] परि-गृहीतस्य जानकी[2] स्कन्धम् आ-प्लुता ॥१६॥ [१३
भर्त्तुर्[3] अङ्कात् समुत्[4]-पत्य ततः कमल-लोचना ।
N] चन्द्र-सूर्यौ[5] मया[6] दृष्टौ पाणिना परि-मार्जती ॥१७॥ [१४
ततस् ताभ्यां कुमाराभ्याम्[7] आ-स्थितोऽसौ गजोत्तमः।
N] सीतया च विशालाऽक्ष्या लंकां पर्यभि-तः स्थितः ॥१८॥ [१५
पाण्डुरर्षभ-युक्तेन रथेनाऽष्ट[8]-भुजः स्वयम् ।
१४] शुक्ल-माल्याऽम्बर-धरो लक्ष्मणेन सं[9]मा-गतः ॥१९॥ [१६पू
वि-मानात् पुष्पकाद् अद्य रावणः [10]पतितो मया।
१५] कृ[11]ष्यमाणः स्त्रिया दृष्टो[12] मुण्डः पीताऽम्बरो हि[13] सः[13] । [३५
१८उ] उष्ट्रेण च मया दृष्टः प्र-यातो दक्षिणां दिशम्॥२०॥[14] [N
सं[15]माजश् च मया दृष्टो गीत-वादित्र-नृ[16]त्यवान् ।
१९] वि[17]भ्रतां रक्त-माल्यानि रक्षसां रक्त-वाससा[18]म्॥२१॥[19] [४५
लंका चेयं[20] पुरी कृत्स्ना गज-वाजि-रथा[21]ऽऽकुला ।
२०] सागरे पतिता दृष्टा[22] मग्न-गोपुर[23]-तोरणा ॥२२॥ [४६

---

१ आ-भ्रात्रा । २ ल$_2$-पानिना परिमार्जंती । फ च-०की स्कन्धमास्थिता । रा प्र ब म ल$_1$-०की स्कन्धमागता । अ-०की स्कन्धमास्थित ॥ ३ आ-भुर्त्तुर् । ४ च रा प्र ब म ल$_1$ ल$_2$-समुत्सृज्य । ५ ब म ल$_1$ ल$_2$-०सूर्योपमा । ६ फ अ-दृष्टौ ॥ ७ अ-०रीभ्या । ८ फ-०स्थित· स ॥ ९ अ-०थेनोरुभज स्व० । १० च रा प्र ब म ल$_1$ ल$_2$-महागत ॥ ११ च-पातितो । १२ च-कृष्णमाल्यानु·लेपन. । १३ आ रा प्र ब म ल$_1$ ल$_2$-हसन् । १४ प्र ल$_1$-नास्ति ॥ १५ ल$_2$-त्रुटितः पाठ. । १६ रा ब ल$_1$ ल$_2$ अ-०नृत्तवान् । म-०त्रनिस्वन । १७ अ-बिभ्रती । १८ आ अ-०वाससम् । १९ प्र-नास्ति ॥ २० अ-वेय । २१ रा प्र ब म ल$_1$ ल$_2$-०समाकुला। २२ फ च ल$_2$ अ-दृष्ट्वा । २३ च ल$_2$-मग्ना गो० । फ अ-मग्न-प्राकारतो० ॥

पीत्वा तैलं प्र-नृत्यन्त्यः[1] प्र-हसन्त्यो महा-स्वनाः[2] ।
२१ ] लंकायां भस्म-रूपायां सर्वा[3] राक्षस-योषितः ॥२३॥ [४८

कुम्भ-कर्णाऽऽदयश् चेमे[4] सर्वे राक्षस-पुङ्गवाः ।
२२] पीतैश्[5] च वसनैर् दृष्टाः क्रीडन्तो गोमये ह्रदे॥२४॥ [४९

श्वेतं[6] पर्वतम् आ-रूढस् त्व् एक एव विभीषणः । [N
२३] चतुर्भिः सचिवैः सार्द्धं राक्षसैर्[7] अनिलाऽऽदिभिः॥२५[४४उ

अप-सर्प्पत पश्यध्वं[8] श्रुत्वा खलु स[9] राघवः ।
२४] घातयेत् परमाऽमर्षी सर्वान् आ-गम्य[10] राक्षसान् ॥२६॥ [५०

प्रियां बहु-मतां[11] भार्यां[11] वन-वासेऽप्य् अनु-व्रताम्[12] ।
२५] भर्त्सितां त्रासितां[13] वाऽपि[13] राघवो नाऽनु-मंस्यते ॥२७॥ [५१

तद् अलं क्रूर-वाक्यैर्[14] वः[15] सान्त्वम् एवाऽभि-धीयताम् ।
N] अभि-याचत वैदेहीम् एतद् हि मम रोचते ॥२८॥ [५२

२९उ] यस्या[16] ह्य् एवं[16]-विधः स्वप्नो दुःखितायाः प्र-दर्श्यते[17] ।
सा दुःखैर् बहुधा[18] मुक्ता[18] श्रियं[19] प्राप्नोत्य्[20] अन्-उत्तमाम्[20]२९॥[५३

---

१. अ–प्रतप्ताश्च । २. अ–०श्वना: । ३ अ–सर्वरा० ॥ ४. फ रा प्र अ–चैव । ५ आ–रा प्र ब ल$_1$ ल$_2$ अ–पीतैर्निव० ॥ ६. फ–श्वेतपर्व० । अ–श्वेत पर्वतमासाद्य । ७. रा म–०सैरनला० ॥ ८ प्र म ल$_1$ ल$_2$–नश्यध्व । ९ प्र म ल$_1$ ल$_2$ अ–स खलु । १० ल$_1$ ल$_2$ अ–आगत्य । ११ फ–०मता भार्या । १२ फ–०व्रता । १३ फ–त्रासिता चापि ॥ १४ अ–०वाक्यैश्च । १५ आ–शीलमेवा० । फ–शान्त्वमेवा० । च रा ल$_1$–सान्त्वमेव विधी० । प्र अ–सान्त्वमेव विधी० ॥ १६. रा–यथा एवविधः । प्र ब म ल$_1$ ल$_2$–०स्या एवविधः । १७ प्र ब म ल$_1$ ल$_2$–०प्रदर्शित । १८ ब म ल$_1$ अ–बहुभिर्मुक्ता । १९. फ ब म ल$_1$–प्रियं । २० ब म ल$_1$–पश्यत्यनतरम् । आ अ–०प्नोत्यनुत्तमम् ॥

३०] भर्त्सिताम् अभि-याचध्वं राक्षस्यः किं वि-वक्षया ।
३१पू] राघवाद् हि भयं घोरं राक्षसानाम् उप-स्थितम् ॥३०॥ [५४
प्रणि-पात-प्रसन्ना हि मैथिली जनकाऽऽत्म-जा ।
N] अलम् एका परि-त्रातुं राक्षसीर् महतो भयात् ॥३१॥ [५५
३१उ] अपि चाऽस्या विशालाऽक्ष्या न किञ्चिद् उप-लक्षये ।
वि-रूपम् अथ चाऽङ्गेषु यत् सूक्ष्मम् अपि लक्षणम् ॥३२॥[५६
३२] छाया वै-गुण्यम् आ-याति यतो दुःखम् उप स्थितम् ।
३३पू] अ-दुःखाऽर्हाम् इमाम् देवीं न क्लेशयितुम् अर्हथ ॥३३॥[५७
अर्थ-सिद्धिं तु वैदेह्याः पश्याम्य् अहम् उप-स्थिताम् ।[14]
३४] राक्षसेन्द्र-विनाशं च वि-जयं राघवस्य च ॥३४॥ [५८
२६पू] निमित्त-भूतम् एतत् तु श्रोतुम् अस्या महत् प्रियम् ।
२७पू] स्फुरत् पश्यामि नयनं पद्म-पत्रम् इवाऽऽयतम् ॥३५॥ [५९
२६उ] ईषच् च हृषितो ह्य् अस्या दक्षिणोऽतिप्र-दक्षिणः ।
अकस्माद् अथ वैदेह्या बाहुर् एकः प्र-वेपते ॥३६॥ [६०

---

१ च रा प्र ब ल$_1$ ल$_2$—०मपि या० । अ—०मुपया० । म—तर्त्सी-तामभिया० । आ—०मपि याचत्व । २ अ—किंचिदक्षयम् ॥ ३ अ—प्रणिपत्य प्र० । ४ आ फ रा प्र ब म ल$_1$ ल$_2$—आर्ता ॥ ५ आ—०लक्षयेत् । अ—०लक्ष्यते । प्र—०मस्यते । ६ आ फ—विरुद्धमपि । अ—विरुद्धयापि । ७ च—त्वाङ्गेषु । ८ अ—सुसू० । ९. रा म—किंचन । प्र—गम्यते । ब ल$_1$ ल$_2$—जायते ॥ १० अ—आख्याति । ११ आ फ च रा प्र ब म ल$_1$ ल$_2$—यातो । १२ ल$_1$—०खार्ताम् । १३. आ फ च प्र ल$_1$ ल$_2$ अ—नियता सत्यस्थिताम् ॥ १४ रा ब म—नास्ति ॥ १५ अ—सुरत् ॥ १६ रा प्र ब ल$_1$ ल$_2$—एष चादूषितो । आ—ईषच्च दूषितो । फ रा—ईषच्च दूषितोप्यस्या. । १७ प्र ब ल$_1$ ल$_2$—०क्षिणाया प्रद० । १८ फ अ—एव । ल$_1$—एष । १९. अ—०हुमेकं स्म वे० । ल$_1$—०कः प्रकम्पते ॥

२८] करेणु-हस्त-प्रतिमः[1] सव्यश् चोरुः सं[2]-वेपथुः ।
२९पू] देव्याः सूचयतीऽवाऽस्या राघवं स्थितम्[3] अग्र-तः[3] ॥३७॥ [६१

पक्षी[4] च[5] शाखा-निलयैः[5] प्र-हृष्टैः[5]
पुनः पुनश् चोत्तम-सान्त्व[6]-वादी ।
मुखाऽऽगतां[7] वाचम् उदीरयन्[8] वै[9]
३९] प्रत्या-गमं देशयतीऽव[10] काकैः[1] ॥३८॥ [६२

इत्यार्षे रामायणे सुन्दर-काण्डे लङ्का-पर्वणि त्रिजटा[11]-स्वप्न-दर्शन
नामैकविंशः सर्गः ॥२१॥

---

१ अ–०स्तप्रमितः । २ अ–प्रवे० । ३ फ–पुरतः स्थितम् ॥
४ फ म अ–पक्षीव । ५ आ रा प्र ब ल₁ ल₂–शाखालयन प्र० ।
फ अ–शाखालयगः प्रकामं । ६ आ च ब ल₁ ल₂–०मशान्तवादी ।
रा म–०मशान्तिवादी । ७ आ–०गता । च–मुखाग० । ८ अ फ–
०रयान । च–०रयित्वा । अ–रयश्च । ९. फ–चोदय० । अ–नोदय० ।
१० फ–हृष्ट. ॥ ११ ब–त्रिजटायुः स्व० । रा म–०टास्वप्नो नाम ॥

सा राक्षसेन्द्रस्य वचो वि-चिन्त्य[1]
तद् राक्षसीनां च वचः सु-तीक्ष्णम् ।
सीताऽपि[2] तत्रास यथा वनाऽन्ते
१ ] सिंहाऽभि-पन्ना गज-राज-कन्या ॥ १ ॥ [१

सा राक्षसी-मध्य-गता च[3] भीरुर्
वाक्यैर् भृशं रावण-तर्जिता[4] च ।
कान्तार-मध्ये वि-जने वि-सृष्टा
२] बालेव कन्या वि-ललाप सीता ॥ २ ॥ [२

सत्यं तु चेदं[5] प्र-वदन्ति लोके
नाऽकाल-मृत्युर् भवतीऽति तज्ज्ञाः[6] ।
यत्राऽहम् एवं परि-भर्त्स्यमाना[7]
३] जीवामि किञ्चित् क्षणम्[8] अल्प-पुण्या ॥३॥ [३

मुखाद्[9] वि-हीनं बहु-दुःख-पूर्णम्
इदं तु[10] नूनं हृदयं स्थिरं[11] मे ।
वि-दीर्यते यन् न सहस्र-धाऽद्य[12]
४] वज्राऽऽहतं शृङ्गम् इवाऽचलस्य[13] ॥४॥ [४

---

१. फ व अ–निशम्य । २ फ म अ–सीता वित०॥ ३. फ–सुभीरुर् । च रा प्र व म ल$_1$ ल$_2$–०तापि भीरुर् । अ–तु भीरुर् । ४ आ–०णपालिता ॥ ५ आ–तथेद । फ–यथेदं । ६ रा प्र व म ल$_1$–विज्ञाः । ७ रा प्र–परितर्ज० । व म ल$_1$–परितर्ज्य० । ८ रा प्र व म ल$_1$ ल$_2$–कृपणाल्प० ॥ ९. रा व म ल$_1$–सुखेर् । १० फ व–हि । ११ ल$_2$–स्थित । १२ अ–०धा यद् । १३ ल$_2$–इवाबलस्य ॥

शेषं त्व् इदानी मम नास्ति नूनं
　　वध्याऽहम्[1] अद्याऽप्रिय-दर्शनस्य ।
भावं न चाऽस्याऽहम्[2] अनुप्र-दातुम्
५]　　अलं द्विजो[3] ब्रह्म यथाऽन्त्य-जाय[3] ॥५॥ [५
नूनं ममाऽङ्गान्य्[4] अ-चिराद्[4] अन्-आर्यः
　　शस्त्रैः शितैश् छेत्स्यति राक्षसेन्द्रः ।
तस्मिन्न् अना-गच्छति लोक[5]-पाले
६]　　गर्भ-स्थ-जन्तोर् इव शल्य-हर्ता[6] ॥६॥ [६
दुःखं किलेदं[7] मम दौर्-मनस्यं
　　मासौ चिरायाऽधि[8] गमिष्यतो द्वौ[9] ।
वध्यस्य[10] बन्धे हि यथा निशाऽन्ते[11]
७]　　राजाऽप-कर्तुस्[12] त्व् इह तस्करस्य ॥७॥ [७
हा राम हा लक्ष्मण हा सुमित्रे
　　हा राम-मातः सह मे जनन्या ।
एषा[13] वि-पद्ये[13] भृशम् अल्प[14]-पुण्या ।
८]　　महाऽर्णवे नौर् इव वायु-नुन्ना[15] ॥८॥ [८

---

१. फ च–०हमस्याप्रि० । रा–यथाहमद्या० । ब–धन्याहमद्या० । ल१ ल२–दध्याहमद्या० । २ फ च–वास्याह० । ३. फ–द्विजो वेदमथान्त्यजस्य । ब–द्विजैर्ब्रह्मथान्त्यजस्य ॥ ४ च रा ब म ल२–०ङ्गानि चिराद् । प्र–०ङ्गानचिराद् । ५. फ अ–लोकनाथे । ६ आ–शल्यहर्त्तुः ॥ ७ फ रा प्र ब म ल१ ल२ अ–च नेद । ८ आ–चिरस्याधिग० । ९ आ–च । अ–वै । १० आ–वद्धस्य वंधैर्हि । च अ–वद्धस्य वद्धस्य । ११. आ–निसान्ते । १२ आ–०पहर्तुस् । अ–राज्यापहर्त्तुस्॥ १३ आ–एषाभिपद्ये । १४ अ–अल्पभाग्या । १५ आ–वातरुग्णा । फ च अ– वातरुग्ना ॥

तौ धारयन्तौ हि मृगाऽधिपस्य
सत्त्वं च रूपं च नरेन्द्र-पुत्रौ ।
नूनं वि-नष्टौ मम कारणाय[1]
९]          सिहर्षभौ द्वाव् इव वैद्युतेन[2] ॥९॥ [९

नूनं स कालो मृग-रूप-धारी
माम्[3] अल्प-भाग्यां लुलुभे तदानीम् ।
मोहान् मया तत्र तु तौ नि-युक्तौ
१०]          रामाऽनुजो लक्ष्मण-पूर्वजश् च ॥१०॥ [१०

हा राम सत्य-व्रत दीर्घ-बाहो
हा पूर्ण-चन्द्र-प्रतिमान-वक्त्र ।[4]
हा जीव-लोकस्य हितं[5] प्रियां स्वां
N]          वंध्यां[6] न मां वेत्स्यसि[7] राक्षसानाम्[8] ॥११॥ [११

अन्-अन्य-दैवत्यम्[9] इदं क्रमाच्[10] च
भूमौ च शय्या नि-यमश् च धर्मे ।
पति-व्रतत्वं[11] च ममाऽफलं[12] स्यात्
N]          कृतं कृत-घ्नेष्व् इव मानुषाणाम् ॥१२॥[13] [१२

मोघो[14] हि धर्मश् चरितो मयाऽयं[15]

---

१. फ–कारणात्तु । २ च रा प्र ब म ल, ल२–वैकृतेन ॥ ३. च ग ब म ल१ ल२–ममाल्पभाग्याल्लुलुभे । अ–ममाल्पभाग्यं लु० । ४. फ–हा राम पूर्णेन्दुतिरूपवक्त्र । ५ आ–हितः प्रयातो । च रा प्र ब म ल१ ल१–०त प्रियाद्य । ६ फ च प्र–बद्धा । ब म ल१ ल२–वश्यां । ७ आ फ च प्र ग ब अ–वेत्स्यति । ८ म–राक्षसीनाम् ॥ ९ फ च अ–०न्यदेवत्वमिद । १० आ–क्रमाश्च । म–क्षमा च । ११ म–पतिव्रतात्वं । १२. आ–न मेऽफलं । १३ रा ब प्र ल२–नास्ति । ल१–अतः श्लोकादारभ्य सर्गसमाप्ति यावत्त्रुटित पाठः ॥ १४ च रा प्र ब म–मिथ्या । १५ च प्र म–मया तु । आ रा ब–मया यत् ।

तथैक-पत्नीत्वम्[1] इदं निर्-अर्थम्[2] ।
यत्[3] त्वां न पश्यामि कृशा वि-वर्णा
N] हीना त्वया सं-गमने[4] निर्-आशा ॥१३॥ [१३
पितुर् नि-देशान्[5] नियमाद्[5] वि-हीनो
वनान् नि-वृत्तश् चरित-व्रतश् च ।
स्त्रीभिस्[6] तु मन्ये[6] वि-पुलेक्षणाभिः
N] सं-रंस्यसे[7] वीत-भयः[8] कृताऽर्थः । [१४
अहं तु राम त्वयि जात-कामा
सदा वि-नाशाय[9] नि-बद्ध[10]-भावा ॥१४॥
स्वयं[11] चरित्वा च[11] तपो व्रतं च
N] त्यक्ष्यामि[12] धिग् जीवितम्[12] अल्प-भाग्या[13] । [१५
विषस्य दाता न[14] च मेऽस्ति[14] कश्चित्
शस्त्रस्य वा वेश्मनि रावणस्य ॥१५॥
शोकाऽभि-तप्ता बहु-धा वि-चिन्त्य
N] दीनाऽथ[15] वेण्य्-उद्ग्रथनं गृहीत्वा । [१६
उद्बद्ध[16]-वेण्य्-उद्ग्रथनेन शीघ्रम्
अहं गमिष्यामि यमस्य मूलम् ॥१६॥ [१८

---

१ अ फ च रा प्र—०कपत्नित्वम् । २ ब म ल$_1$ अ—निरर्थकम् । ३ अ—या । ४ आ—०मनान्निराशा ॥ ५ अ—नियोगान्नियमावि० । ६ म—स्त्रीभिश्च म० । च रा प्र ब ल$_2$—०भिस्तु मध्ये । ७ फ—संरम्यसे । प्र—संरक्ष्यसे । अ—सरस्यते । ८ आ—वीतभय ॥ ९ फ अ—चिर वि० । च रा ब प्र म ल$_2$—निवासाय । १० प्र ल$_2$—निबद्धकामा । ११. अ—मोघं चरि० । फ—स्वय चरित्वाथ । १२ फ—०मिच्चिज्जीवि० । च—त्यक्ष्याम्यह जी० । १३ अतः परमधिकः पाठ —म—सा जीवितं क्षिप्रमहं त्यजेयं विषेण शस्त्रेण शितेन वापि । १४. फ—तु न मेस्ति । अ—न तु मेऽत्र । १५ फ च रा प्र ब म ल$_2$ अ—सीताथ ॥ १६ ब—तद्बद्धवे० ।

इतीऽव सीता बहु-धा वि-लप्य
N] सर्वाऽऽत्मना रामम् अनु-स्मरन्ती ।
प्र-वेपमाना परि-शुष्क-वक्त्रा
नगोत्तमं पुष्पितम् आ-ससाद ॥१७॥ [१.७

उप-स्थिता सा मृदु-सर्व-गात्री
N] शाखां गृहीत्वा तु नगोत्तमस्य । [१.९
तस्यास् तु रामं परि-चिन्तयन्त्या
११.पू] रामाऽनु-जं स्वं च कुलं शुभाँऽङ्ग्याः॥१८॥

शुभानि सर्वाणि तथा बहूनि
N] मन्योचिनानि प्र-वराणि लोके ।
प्रादुर् निमित्तानि तदा बभूवुः
११.उ] पुरा वि-शुद्धानि सु-लक्षणानि ॥१९॥ [२०

इत्यार्षे रामायणे सुन्दर-काण्डे सीता-विलापो
नाम द्वाविंश सर्ग ॥२२॥

---

१. आ–अनुस्मरती ॥ २ ब ल$_2$–प्रविशु०। ३ प्र–शिखा । ४ फ अ–०त्वाथ ॥ ५. आ-परिचिन्त्ययन्त्या । ६ ल$_2$–रामाग्रज । ७ आ च रा प्र ब म ल$_2$–शुभाया । अ–शुभाग्या । ८ फ अ–तदा । ९ आ च रा प्र ब म ल$_2$–तथा । १० फ–पुरापि सिद्धानि । अ–पुरो विशु० । ११ ल$_1$ ल$_2$–सलक्ष्मणानि ॥ १२ फ–०काण्डे दिग्विजये सी० । रा म–०काण्डे लंका-पर्वणि सी० ॥

तथा-गतां च[1] व्यथिताम् अ-निन्दितां[2]
व्य्‌अपेत-हर्षां [3]परिदीन-मानसाम् ।
[4]तदा निमित्तानि शुभानि भेजिरे
१२] [5]नरं श्रिया जुष्टम् इवोप-जीविनः[6] ॥१॥ [१

तस्याः शुभं वाम-मराल-पक्ष्म
राजीववन कृष्ण-विशाल-[7]शुक्लम् ।
प्राऽस्पन्द[8]तैकं नयनं सु-केश्या
वाताऽऽ[9]हतं पद्मम् इ[10]वाऽभि-ताम्रम् ॥२॥ [२

१३] भुजश् च [11]चार्व्-आयन-पीन-[11]वृत्तः
पराऽर्घ्य-कालाऽगुरु-चन्दना[12]ऽर्हः ।
अन्-उत्तमेनाऽध्य्-उषितः प्रियेण
प्राऽवेपताऽस्याः सु-चिरेण [13]वामः ॥३॥ [३

१४] गजेन्द्र-हस्त-प्रतिमश् च पीनः
तयोर् द्वयोः सं-[14]हतयोः [14]सु-जातः ।[15]
प्राऽऽस्पन्दमा[16]नः [17]पुनर् ऊरुर् [17]अस्या
१५] रामं पुरस्ताद् स्थितम् आ-चचक्षे ॥४॥ [४

---

१. आ अ फ–'च' इति 'गता' इत्यतः पूर्वं क्रमव्यत्यत इव पठितः । २. च रा प्र ब म ल$_2$–तथागता सुव्यथिता सुदीनां । ल$_1$–अत आरभ्य सर्गसमाप्तिं यावत्त्रुटित. पाठ । ३ रा म–०र्षांमतिदी० । ल$_2$–०र्षां परदी० । अ–०तसत्त्वां परिदी० । ४ च रा प्र ब ल$_2$–तथा । ५ रा प्र ब म ल$_2$–जयश्रिया । ६ फ–इवोपशोभा ॥ ७ आ च रा ब म ल$_2$–०युक्त । ८ ल$_2$–अस्पन्द० । ९ फ अ–मीनाहत । १० फ च ल$_2$ अ–इवातिता० । ११ फ–दिव्याभरणोपयोग्यः । अ–त्राभेतरपी० । ब म ल$_2$–चार्वंचितपी० । १२ आ–०नाभ. । १३ अ–चारु । १४ आ च रा प्र ब म ल$_1$–०योश्च जा० । १५ वं–अस्य पादस्य स्थाने"पीतोरुरेक सुशुभ सुजातः" इति पठति । १६ रा–०न्दमाना । १७. आ–कनकावदातः । अत्र पद्ये शाखान्तरसमेलनापेक्षः शोधः द्र०॥

मुखं[1] पुनर् हेम-समान-वर्णम्
ईषद्-रजो-ध्वस्तम् इवाऽमलाऽक्ष्याः ।
वामः[2] स्थितायाः शिखराऽग्र-दत्याः
N] किञ्चित् स्तनोऽस्पन्दत[3] चारु-गात्र्याः[4] ॥५॥ [५

एतैर्[5] निमित्तैर् अपरैश् च सीता
सन्-नोदिता[6] प्राग् अपि साधु-सिद्धैः[7] ।
वाताऽऽतप-क्लान्तम् इवाऽप-कृष्टं[8]
१६] वर्षेण[9] वीजं[10] प्रतिसं-जहर्ष[11] ॥६॥ [६

तस्याः पुनर् बिम्ब-फलाऽधरोष्ठं[12]
सुभ्र्व[13]-अक्षि केशाऽन्त-मराल-पक्ष्म ।
वक्त्रं बभासे सित[14]-चारु-दंष्ट्रं
१७] राहोर् मुखाच् चन्द्र इव प्र-मुक्तः[15] ॥७॥ [७

सा वीत-शोका[16] व्यप-नीत-तन्द्रा[17]
शान्त-ज्वरा[18] हर्ष-विशुद्ध-सत्त्वा ।
अशोभताऽऽर्या वदनेन सु-भ्रूः
१८] शीतांऽशुना रात्रिर् इवोदितेन ॥८॥ [८

इत्यार्षे रामायणे सुन्दर-काण्डे लङ्का[19]-पर्वणि[19] सीता-निमित्त-दर्शनो[20]
नाम त्रयोविंशः सर्गः ॥२३॥

---

१ फ अ–शुभ । २ फ–वास । ३ आ–अनोस्यन्दत । फ–तदास्रसत । च–स्तनौ स्यन्दत । अ–तदास्यन्दत । रा प्र ब म–स्तनोऽस्यन्दत । ४. ल२–रामपत्न्या. ॥ ५. फ अ–सुभ्रू । ६ प्र ब म ल१ अ–सबोधिता । ७ फ च–साधुस्मिद्धैः । ८ ल२–०पक्लिष्टं । अ–इवाप्रहृष्ट । ९ प्र–वर्षं च । १०. आ–वीतप्र० । ११ फ–नास्ति ॥ १२ आ–०धरौष्ठ्या । १३ रा–सुभ० क्षिके० । १४. अ–शितचा० । १५ आ–चन्द्रमिव प्रमुक्तम् ॥ १६ म–वीतलोका । १७ अ–०तनिन्द्रा । १८ आ–शान्तद्वरा ॥ १९ फ च प्र ब ल२ अ–त्रुटित. पाठ । २० प्र ब म ल१ अ–सीताया शुभनिमि० । फ च–०त्तदर्शनं ॥

हनूमान्[1] अपि वि-क्रान्तः सर्वं शुश्राव तत्त्व-तः ।
१] सीतायास् त्रि-जटायाश् च राक्षसीनां च तर्जितम्[2] ॥१॥[१
अवेक्षमाणस्[3] तां देवीं देवताम् इव नन्दने ।
२] ततो बहु-विधां चिन्तां चिन्तयामास वानरः ॥२॥ [२
यां कपीनाम् अनेकानि[4] प्र-युतान्य् अर्बुदानि च ।
३] दिक्षु सर्वासु मार्गन्ते सेयम् आ-सादिता मया ॥३॥ [३
चारेण[5] तु सु-युक्तेन शत्रोः शक्तिम् अभीऽऽप्सुना[6] ।
४] मूढेन चरता तावद् अवेक्षितम् इदं मया ॥४॥[7] [४
राक्षसानां नि-वेशाश् च पुरी चेयम् अवेक्षिता[8] ।
५] राक्षसाऽधिपतेर् अस्य[9] प्र-भावो रावणस्य च[10] ॥५॥ [५
युक्तं तस्याऽप्रमेयस्य सेयं(?सर्वं) सत्त्ववता(?तो)[11]मया ।
६] समा-श्वासयितुं सीतां पत्युर्[12] दर्शन-कांक्षिणीम् ॥६॥ [६
N] अहम् आ-श्वासयाम्य् एनां पूर्ण-चन्द्र-निभाऽऽननाम् ।

---

१. ल२ अ—हनु० । २ फ ल१—गर्जितम् । अ—तर्जनम् ॥ ३. आ च—अवेक्ष्य० । फ अ—अवेक्ष्यमाणस्तामेव ॥ ४ फ—सहस्राणि अयु० । अ—अनीकानि सहस्राण्यर्वुदा० ॥ ५ आ—चारेणापि सु० । फ—०ण तु सुगुप्तेन । म—०ण सुप्रयुक्तेन । ६ फ म—अवेक्षता । ७ रा प्र ब ल२—नास्ति ॥ ८ फ—चेय निरीक्षिता । ९ प्र—०तेस्तस्य । १० फ—तु ॥ ११. 'सेयम्' इति काऽपि पुरातनी विकृतिः । तु० दा वं—उभयत्रादौ सकारस्य विद्यमानत्वं मूलत एवाऽसावेवमिति प्रतिभाति । तथाहि, दा—सर्वस०, वं—सत्यम्, इति च पाठौ भवत. । एव वं—'सत्यवतः' इति पठति । १२. अ ब—भार्यां पत्युर् । फ—भार्यां पतिद० ॥

अ-दृष्ट-दुःखा[1] दुःखस्य नह्य् अन्तम् अधि-गच्छति[2]॥७॥ [७

७] यदि ह्य् अहम् इमाम् एवं शोकोप-हत-चेतनाम्[3] ।

८पू] अन्-आश्वास्य गमिष्यामि दोषवद्[4] गमनं भवेत् ॥८॥[5] [८

गते हि मयि तत्रेयं राज-पुत्री यशस्विनी ।

N] परि-त्राणम् अ-विन्दन्ती जानकी जीवितं त्यजेत्॥९॥ [९

८उ] मया स[6] च[7] महा-बाहुः पूर्ण-चन्द्र-निभाऽऽननः ।

समा-श्वासयितुं[8] योग्यः सीता-दर्शन-लालसः ॥१०॥[१०

९] निशा-चरीणां प्रत्य्-अक्षं न[9] क्षमं प्रति-भाषणम् ।

कथं नु खलु कर्त्तव्यम् इदं कृच्छ्र-गतो ह्य् अहम् ॥११॥ [११

१०] अनेन रात्रि-शेषेण यदि नाऽऽश्वास्यते[10] मया ।

सर्वथा नास्ति सन्देहः परि-त्यक्ष्यति[11] जीवितम् ॥१२॥ [१२

११] रामश्च यदि पृच्छेन[12] मां किं मां सीताऽब्रवीद् वचः।

१२पू] किम् अहं तं [13]प्रति-ब्रूयाम् अ-संभाष्य सु-मध्यमाम्॥१३॥[१३

१३उ] सीता-सन्देश-रहितं माम् इतस् त्वरया गतम् ।

निर्-दहेद् अपि काकुत्स्थः क्रुद्धस् तीक्ष्णेन चक्षुषा॥१४॥ [१४

१४] यदि अना-श्वास्य[14] गच्छामि शोकेनाऽभिनि-पीडिताम्[15]।

१५पू] [16]यांऽऽस-दोषो भविष्यामि दोषश् चाऽकथने महान्॥१५॥[N

---

१ रा म—०ष्टदुःखा । प्र—०ष्टपूर्वा । ब ल$_1$—०ष्टपर्वा । २ रा म—अधिगच्छती ॥ ३ अ—०नचेतसाम् । ४ आ— दोषं बहुमते भ० । ५ अत परमधिक. पाठ —म—तस्मादाश्वास्य वैदेहीं गन्तव्यं न त्वदृष्टया ॥ ६ फ अ—च म । ७ आ—पमाश्वा० ॥ ८ रा प्र ब म ल$_2$—न वक्तु प्रतिभाति मे । अ—मयास्या अभिभा० । ९ आ च रा प्र ब म ल$_2$ अ—इति ॥ १० अ—नाश्वस्यते । ११ आ—परित्यजति ॥ १२. फ—वा पृच्छेत् । १३ फ रा प्र ब म ल$_2$ अ—प्रेय ब्रू० ॥ १४. आ—यथानाश्वास्य । १५. रा—शोकन यदि नि० । ब—०नातिनि० । १६. ब म ल$_2$—प्रायो दोषी ॥

यदि नाम गमिष्यामि भर्तारं राम-कारणात् ।
N] वृथा गमनम् इत्य्-एव तस्य राज्ञो भविष्यति ॥१६॥ [१५
१५उ] अन्तरं च समा-साद्य राक्षसीनाम् इह स्थितः ।
शनैर् आ-श्वासयिष्यामि सं-ताप-बहुलाम् इमाम्॥१७॥ [१६
१६] अहं ह्य् अ-विदितश् चैव वानरश् च वि-शेषतः ।
१७पू] वाचं चोदीरयिष्यामि मानुषीं च सु-संस्कृताम् ॥१८॥ [१७
N] यदि चैवाऽभि-धास्यामि संताप-बहुलाम् इमाम् ।
१८पू] रावणं मन्यमाना मां सीता भीता भविष्यति॥१९॥ [१८पू
अवश्यम् एव वक्तव्य मानुषं वाक्यम् अर्थवत् ।
N] मया सान्त्वयितुं शक्या नाऽन्यथेयम् अ-निन्दिता॥२०॥[१९
१७उ] सेयम् आ-लोक्य मे रूपं जानकी भाषितं तथा ।
N] रक्षोभिस् त्रासिता पूर्वं भूयस् त्रासं गमिष्यति ॥२१॥ [२०
१८उ] ततो जात-परि-त्रासा शब्दं कुर्यात् तपस्विनी ।
जानीते हि विशालाऽक्षी रावणं काम-रूपिणम् ॥२२॥ [२१
१९] सीतया हि कृते शब्दे सहसा राक्षसी-गणः ।
नाना प्र-हरणो घोरः समेयाद् अन्तकोपमः॥२३॥ [२२

---

१. फ– चेद् योजयिष्यामि । अ–नोद्योजयिष्यामि । २ फ–व्यर्थमागनन्तस्य ससैन्यस्य भ० । अ–व्यर्थं गमनमित्येव तस्य राज्ञो ॥ ३ फ–०र त्वहमा० । ल$_2$–अनन्तर म० । ४ ल$_2$–अह । ५ आ–आश्वास०॥ ६ आ–अणु ह्यतितनुश् । च रा प्र ब म ल$_2$ अ–अह ह्यतितनुश् । ७ फ च रा ब ल$_2$ अ प्र ल$_1$–मानुषीमेव स० । म–मानुषीमिव स० ॥ ८ रा प्र ल$_2$–वाचाभि० । ब ल$_1$–वा नाभि० । ९ फ अ–नास्ति । १० प्र–सा ॥ ११ च रा ब म ल$_1$ ल$_2$–वदता ॥ १२ फ–अन्यथालोक्य ॥ १३ फ म–कुर्यान्मनस्विनी । १४ च रा प्र ब ल$_1$ ल$_2$–नास्ति । १५ प्र–जानकीय वि० । ब–जानाति हि ॥ १६ फ –नानाप्रहरणोपेतो मामुपेयान्न सशय. । च–नानाप्रहरणा घोराः समग्रादन्तकोपमा. । रा प्र ब म ल$_1$ ल$_2$–नानाप्रहरणा घोरा समग्रा अन्तकोपमाः ॥

२०] ताश्[1] च मां संपरि-क्षिप्य[2] सर्व-तो वि-कृताऽऽननाः ।
वधे च[3] ग्रहणे चैव कुर्युर्[4] यत्नं यथा-बलम् ॥२४॥ [२३

२१] ततः शाखाः प्र-शाखाश् च स्कन्धाश् चोत्तम-शाखिनाम् ।
२२पू] दृष्ट्वा[5] विपरि-धावन्तं भवेयुः[6] परि-शङ्किताः ॥२५॥ [२४

मम रूपं च[7] सं-दृश्यं[8] वने वि-चरतो महत्[9] ।
N] राक्षस्यो भय-संत्रस्ता[10] भवेयुर् वि-कृताऽऽननाः ॥२६॥ २५

२२उ] ततः कुर्युः समा-ह्वानं राक्षस्यो रक्षसाम् अपि ।
राक्षसेन्द्र-नियुक्तानां राक्षसेन्द्र-निवेशने[11] ॥२७॥ [२६

२३] ते शूल-शर-निस्त्रिंशाः[12] पाश-तोमर-धारिणः[13] ।
२४पू] आ-पतेयुर् वि-मर्देऽस्मिन् वि-विधाऽऽयुध-पाणयः ॥२८॥ [२७

सं-क्रुद्धस्[14] तेषु रक्षःसु वि-धमन्[15] रक्षसां बलम् ।
N] शक्नुयां न[16] तु सं-प्राप्तुं परं पारं महोदधेः ॥२९॥[17] [२८

हिंस्रा-रुचिन्त्वान[18] मां हिंस्युर् इमां वा[19] जनकाऽऽत्म-जाम् ।

१ अ—ततो । २ फ—०रिप्रेक्ष्य । च रा प्र ब म ल१ ल२—०रिज्ञाय सर्वाश्च । ३ फ—वा । ४ अ—कुर्याद्यत्न यथा तथा । ल२—०त्न महाब० ॥ ५ फ—०दृष्ट्वापि प० । ल१—मामभिधा० । ६. फ रा प्र ब म ल१ल२ अ—भवेयुर्भयश० ॥ ७ अ—त्वमादृश । रा प्र ब ल१ ल२ अ—त्वमदृशं । ८ फ म—च चरित । ९ आ—महान् । १० फ—अ—०वित्रस्ता ॥ ११. फ—मम सप्रति शातने ॥ १२ अ—०स्त्रिशविविधायुधपाणय । १३ फ—वेगेनाविघ्नकारिणः । अ—वेगेन विघ्नकारिण ॥ १४ फ—सरुद्धेस्तेस्तु रक्षोभिर्विधमन् । अ—सरुधेस्तैस्तु रक्षोभिर्विचिन्वन् । ल१—०सु विदलन् । १५ फ ल१—राक्षस बल । ब म—राक्षसाब० । १६ ल१—नियत प्रा० । १७ अतः परमधिक पाठः—अ—मा वा गृह्णीयुराप्लुत्य† बहव शीघ्रकारिणः । स्यादियं निगृहीतार्थाः‡ मम च ग्रहणं भवेत् ॥ १८ च प्र ल२—अतिक्रुद्धाश्च । रा ब म ल१ अ—अभिक्रुद्धाश्च । १९ रा ब म ल१ ल२ अ—च ।

† च रा ब प्र म ल२—गृह्णीयुराक्रम्य । ल१—गृह्णीयुरथक्रम्य । ‡ च—निगृहीतार्थं ।

२५] वि-पन्नं[1] स्यात्[1] ततः कार्यं[2] राम-सुग्रीवयोर्[3] इदम्॥३०॥ [३०
प्र[4]-देशे नष्ट-मार्गे च[4] राक्षसैः परि-वारिते ।
N] सागरेण परि-क्षिप्ते दुर्गे[5] वसति जानकी ॥३१॥ [३१
वि-ध्वस्ते[6] वा गृहीते वा रक्षोभिर्[7] मयि सं-युगे ।
२६] नाऽन्यं पश्यामि रामस्य सहायं[8] कार्य-साधने ॥३२॥ [३२
वि-मृशन् नैव पश्यामि यो हते मयि वानरः ।
२७] शत-योजन-विस्तीर्णं लंघयेत्[9] तु[9] महोदधिम् ॥३३॥ [३३
३०पू] कामं हन्तुं समर्थोऽस्मि सहस्राण्य्[10] एवं[10] रक्षसाम् ।
२९उ] न तु शक्ष्यामि[11] सं-प्राप्तुं परं पारं महोदधेः ॥३४॥ [३४
स-संशयानि[12] युद्धानि[12] सं-शयो मे न रोचते ।
३१] कश्[13] च[13] निःसं-शयं कार्यं[14] कुर्यात् प्राज्ञः[14] स-संशयम्॥३५॥[३५
३२पू] एष दोषो महान् हि स्यान् मम सीताऽभि-भाषणे ।[15]
N] प्राण-त्यागस् तु वैदेह्या भवेद् अन्-अभि-भाषणे ॥३६॥[16] [३६
सन्तो[17]ऽप्य् अर्था वि-नश्यन्ति[17] देश-काल-विरोधिनः[18] ।
N] वि-क्लवं दूतम् आसाद्य तमः सूर्योदये यथा ॥३७॥ [३७
अर्थाऽनर्थाऽन्तरे बुद्धिर् नीता वा[19]ऽपि न शोभते ।

---

१ फ–विपरीत । २ रा प्र ब म $ल_1$ $ल_2$ अ–कर्म । ३ अ–इति ॥ ४. फ अ–उद्देशे नष्टमार्गेऽस्मिन् । ५ फ–गुप्ते ॥ ६ अ फ–विशस्ते । ७ च प्र $ल_1$ $ल_2$- क्षोभिते । ८ फ अ–सखायं । $ल_2$–साहाय्य ॥ ९ फ च $ल_1$ $ल_2$–लंघयेच्च । अ–लघयेत ॥ १०. फ च प्र ब $ल_2$–सहस्राण्यपि । अ–सहस्राणि च । ११. फ रा म $ल_2$ अ–शक्यामि । $ल_1$–त्रुटित. पाठ ॥ १२. फ–असत्यानि च । रा प्र ब म $ल_1$–सशयोपि हि युद्धेषु । $ल_1$–सशयानि च । १३ अ–कथ । १४. फ अ–कुर्यात्प्राज्ञ कार्यं । रा–कार्यं प्राज्ञ. कुर्यात्ससं०॥ १५ अतः परमधिक. पाठः–म–राक्षसै सह मे युद्धं भवेत् सीताभिभाषणे । १६ $ल_2$–नास्ति ॥ १७. $ल_1$–त्रुटितः पाठः । १८ फ–०विरोधिताः । रा प्र ब म $ल_1$ अ–०विरोधत. । १९ रा ब म $ल_1$ चापि । प्र–अपि ।

N] घातयन्ति हि कार्याणि दूताः पण्डित-मानिनः ॥३८॥ [३८

न वि-नश्येत् कथं[2] कार्यं वैक्लवं न कथं भवेत् ।

N] लंघनं[3] च[3] समुद्रस्य कथं[4] नु न वृथा[4] भवेत् ॥[5]३९॥ [३९

३२उ] कथं नु खलु मे वाक्यं श‍ृणुयान् नोद्विजेत[6] च ।

इति सं-चिन्त्य मतिमांश्[7] चकार हनुमान् मतिम्[7]॥४०॥ [४०

३३] रामम् अ-क्लिष्ट-कर्माणं सं-बद्धमं अनु-कीर्तयन् ।

३४उ] नैनाम्[10] उद्वेजयिष्यामि तत्-सर्व[11]-गत-मानसम् ॥४१॥ [४१

इक्ष्वाकूणां वरिष्ठस्य रामस्य विदिताऽऽत्मनः ।

N] शुभानि धर्म-युक्तानि वचनानि मम-अर्थयन् ॥४२॥ [४२

श्रावयिष्यामि सर्वाणि मधुरं मधुराऽऽत्तरम् ।

N] श्रद्धास्यति यथा ह्रीऽयं तथा सर्वं समा[13]-द्धे ॥४३॥ [४३

३४पू] पति च[14] परि-श‍ृण्वन्ती चिरस्य पुरुषर्षभम् ।

N] व्यक्तं[15] पद्म-पलाशाऽक्षी प्र-हृष्ट-हृदया भवेत् ॥४४॥ [N

N] एवं सं-कीर्तयतो (?यंतं) मह्यं (?मां) रघु-वंश-विवर्धनम् ।[16]

३५उ] पश्यन्ती चाऽग्रतो व्यक्तं नोद्विग्ना मे[17] भविष्यति ॥[18]॥४५ [N

---

१. अ–पात० ॥ २ ल२ अ–इद । ३ ल१–त्रुटितः पाठ. । ४ म–वृथा तु न कथ । अ–कथ न च वृथा । ५ ब ल२–नास्ति ॥ ६ फ अ–नोद्विजेति । आ च रा–नोद्विजेच्च ॥ ७ फ अ–हनुमाश्चकार मतिमान् । च ब ल२–०र हनुमान्कपि' ॥ ८. ल१–त्रुटित. पाठः । ९ आ च–स्त्रधर्मम् । फ प्र म ल२ अ–मम्बन्धम् । १० रा–नैताम् । ल१–नैतम् । ११ प्र ब म ल२–सर्वं ग० । ल१–०तमानसा ॥ १२ रा–नथा चेय । १३. आ च–समादहे ॥ १४ फ अ–हि । १५. अ–युक्त ॥ १६ आ फ च प्र ब ल१ ल२ अ–नास्ति । मूलस्य म–कोशमात्रावस्थितत्वात् प्रस्तावित शोधनं सम्यगवधेयम् । १७ म–हि । १८ रा ब ल२–नास्ति ॥

इति स बहु-विधं महाऽनु-भावो
मनुज-पतेः प्रमदाम् अवेक्ष्य(?क्ष)माणः[1] ।
मधुरम् अ-वितथं जगाद वाक्यं
N] द्रुम-विटपाऽन्तरम् आ-स्थितो महाऽऽत्मा ॥४६॥ [४४

इत्यार्षे रामायणे सुन्दर-काण्डे[2] हनुमद्-विकल्पो
नाम चतुर्विंश सर्ग. ॥२४॥

---

१. फ प्र–अवेक्षमान ॥ २ फ–०ण्डे दिग्विजये ह० । रा ब म–०ण्डे लकापर्वणि ह० ।

एवं[1] बहु-विधां[2] चिन्तां चिन्तयामास[3] वानरः ।
१] श्रावयन्[4] मधुरं वाक्यं वैदेह्या व्या-जहार ह ॥१॥ [१
२पू] राजा दश-रथो नाम रथ-कुञ्जर-वाजिमान्[5] । [२पू
N] चक्रवर्त्ति-कुले जातः पुरन्दर-समो बले[6] ॥२॥[7] [N
२उ] पुण्य-शीलो महा-कीर्त्तिर् ऋजुर् आसीन् महा-यशाः । [२उ
अ-हिंसारतिर्[8] अ-क्षुद्रो घृणी सत्य-पराक्रमः[9] ॥३॥
३] मुख्यश् चेक्ष्वाकु-वंशस्य राज्य-लक्ष्मी-विवर्द्धनः[10] । [४
पार्थिव-व्यञ्जनैर्[11] युक्तः पृथु-श्रीः पार्थिवर्षभः ॥४॥
४] पृथिव्यां[12] चतुर्-अन्तायां वि-श्रुतः सुख-दः सुखी ।
N] धर्म्म-शीलो वदान्यश् च प्रिय-वाची जितेन्द्रियः ॥५॥[13] [N
तस्य पुत्रो गुण-ज्येष्ठस् ताराऽधिप-निभाऽऽननः[14] ।
६] रामो नाम विशेष-ज्ञः श्रेष्ठः सर्व-धनुष्मताम् ॥६॥ [६
रक्षिता स्वस्य वंशस्य जनस्य[15] परि-रक्षिता ।

---

१ फ च प्र ल, ल२–एतद् । २ म अ–०विध चित्र । ३ फ–चिन्तयित्वा स वा० । ल१ ल२–चिन्तयित्वा महाकपि । ४ फ–सश्रवे । रा प्र ब म ल१ ल२–प्रस्तावम० ॥ ५ फ रा प्र ल१ अ–०वाजिनाम् । च ल२–०वाजिवान् । ६ ब–बली । ७. फ अ–नास्ति ॥ ८ फ–०रतिराजेन्द्रो । अ–०तिरक्रुद्धो । ९ प्र ब म ल१ ल२–०परायण । १० आ फ अ–लक्ष्मीवा श्रीवि० । च रा–राजा ल० । ब म–राजल० । ११ ब ल१ ल२–पृथिवीन्द्रो जनैर् ॥ १२ आ–पृथिव्या चतुरन्ताया । फ–०व्या सागरान्ताया । ल२–व्या चतुरन्ताना । १३ अ–नास्ति ॥ १४ रा प्र ब म ल१ ल२ अ–तारापतिनि० ॥ १५ च–जनकस्य प० । फ अ–स्वजनस्य च र० । रा प्र ब म ल१ ल२–जनकस्य च र० ॥

६] रक्षिता जीव-लोकस्य[1] धर्म्मस्य च परं-तपः ॥७॥ [७
तस्य सत्याऽभि-सन्धस्य वृद्धस्य[2] वचनात् पितुः ।
७] स-भार्यः सह[3] च भ्रात्रा वीरः प्र-व्रजितो वनम् ॥८॥ [८
तस्य तत्र महाऽरण्ये मृगयां परि-धावतः ।[4] [९पू
८] रावणेन हृता भार्या मिथिलाऽधि-पतेः सुता ॥९॥ [N
यथा-वर्णा[5] यथा-रूपां यथा-लक्ष्मवतां[6] वराम्[7] ।
N] अश्रौषं सा त्वम् अद्याऽऽर्ये दृष्टा मे[8] नाऽत्र सं-शयः ॥१०॥ [१९
जन-स्थाने वधं श्रुत्वा हतौ[9] च खर-दूषणौ ।
१०] त्वम् अ-मर्षाद् इहाऽऽनीता रावणेन दुर्-आत्मना ॥११॥ [१०पू
शृणु वैदेहि रामस् त्वां [10]पतिः कौशल्यम्[11] अब्रवीत् ।
१०] देवरश् चाऽपि[12] ते शूरः कौशल्यं वाक्यम्[12] अब्रवीत्[13] ॥१२॥ [N
विररामैवम् उक्त्वा तु[14] स वचो[14] मारुताऽऽत्म-जः ।
११] जानकी चाऽपि तच् छ्रुत्वा जहर्ष च ननन्द च ॥१३॥ [१६
[15]ततः सा[16] वक्र-केशाऽन्ता सु-केशी केश-संवृता ।
१२] उन्-नाम्य वदनं भीरुः[17] शिंशिपां[18] समुद्-ऐक्षत ॥१४॥ [१७

---

१ च प्र म ल$_1$ ल$_2$–स्वस्य वशे । रा ब–स्वस्य लो० ॥ २ ल$_2$ अ–बद्धस्य । ३ ब ल$_1$ अ–सह भ्रात्रा च । ल$_2$–सह सुभ्रात्रा । ४ ल$_2$ अ–नास्ति ॥ ५ अ–०रूप । ६ आ फ च रा प्र ब–०लक्ष्मवि ता । च ल$_1$ ल$_2$–०लक्ष्मीवता । ७ रा प्र ब म ल$_1$ ल$_2$ अ–शुभाम् । ८ आ–सत्यम् । रा प्र ब म ल$_1$ ल$_2$–सा तथा दृष्टा मया त्व ॥ ६. रा प्र–हत्वा । १० आ–प्रति । ११ फ–कुशल । १२ च–कौशल्य शूरस्ते वा० । रा ब–ते वाक्य शूर. कुशलमब्र० । म अ–वीर कुशल लक्ष्मणोब्र० । १३ प्र ल$_1$ ल$_2$–नास्ति ॥ १४ फ–स निर्वचो । प्र–स वचो वै । ल$_1$–तु स वचनं । अ–ता स वचो वै॥१५ प्र–तत्तस्य । १६ प्र–तत्तस्य । १७. आ च रा ब प्र ल$_1$ ल$_2$–सीता । १८ आ–०सिसिपा । म ल$_1$ ल$_2$–शिशपां ॥

सा तिर्यग् ऊर्ध्वं च तथा ह्य्[1] अधस्तान्
निर्-ईक्षमाणां[2] तम् अ-चिन्त्य-रूपम् ।
ददर्श पिङ्गाऽधिपतेर् अमात्यम्
N] वाताऽऽत्म-जं सूर्यम् इवोदय[3]-स्थम् ॥१८॥[१९

इत्यार्षे रामायणे सुन्दर-काण्डे[4] हनुमद्-दर्शन
नाम पञ्चविंशः सर्गः ॥ २५ ॥[5]

---

१ आ–हि । २ आ–०माणोत्तमरूपचित्यम् । फ अ–०णा–मचिन्त्यबुद्धिम् । ३ अ–इवाचलस्थम् ॥ ४ रा ब–०ण्डे लङ्कापर्वणि ह० ।
५. फ–सर्गसमाप्तिर्न दृश्यते ॥

ततः शाखाऽन्तरे लीनं[1] त्रस्ता चलित-मानसा । [१पू
१३] सा ददर्श कपिं तत्र प्र-श्रितं प्रिय-वादिनम्[2] ॥१॥ [२पू

सा[3] तु दृष्ट्वा कपि-श्रेष्ठं वि[4]-नीतं विटप[5]-स्थितम् ।
१४] मैथिली चिन्तयामास स्वप्नोऽयम् इति भामिनी ॥२॥ [७

सा तं सम्-ईक्ष्या[6]ऽथ भृशं वि-संज्ञा
गताऽऽसु-कल्पेव बभूव सीता ।
चिरस्य प्रज्ञां प्रति-लभ्य चैव
१५] वि-चिन्तयामास वि[7]शाल-नेत्रा ॥३॥ [९

स्वप्नो मयाऽयं वि-कृतोऽद्य दृष्टः
शाखा-मृ[8]गो धिङ् मम भाग-धेयम् ।
स्वस्त्य् अस्तु रामाय स-लक्ष्मणाय
पित्रे तथा मे जनके[9]श्वराय ॥४॥ [१०

स्वप्न[10]स् तु नाऽयं नहि मेऽस्ति[11] निद्रा
भयेन शोकेन च पीडिताया[12]ः ।
सुखं हि[13] मे नास्ति यतोऽस्मि हीना
१६] तेनेन्दु[14]-बिम्ब-प्रतिमो[14]ऽऽननेन ॥५॥ [११

---

१ ल₂ अ-प्रसृतं । २ ब-ददर्श प्रसृता सीता वानर प्रियवादिनम् ॥ ३ फ-दृष्ट्वा च त क० । अ-सा तु दृष्ट्वा हरिश्रेष्ठ । ४ आ फ-विनीतवदुप० । ५. फ अ-विस्मिता ॥ ६ फ-ईक्ष्यैव । ७ फ-विलोल० ॥ ८ आ-०मृगोय । ९. फ अ-जनकाय राज्ञे ॥ १०. आ-स्वप्नस्त्वय कि । ११. आ च रा प्र ब-मेऽद्य । १२ रा-पीडितात्मा । १३ रा म-च । १४. फ रा प्र ब म ल₁ ल₂-तेनैव पूर्णेन्दुनिभाननेन ॥ अ-तेनेन्दुपूर्णप्र० ॥

अहं हि तस्याऽद्य मनो-भवेन
संपीडिता तद्-गत-सर्व-भावा ।
वि-चिन्तयन्ती सततं[1] तम् एव
[17] रूपं च[2] पश्यामि तथा शृणोमि ॥६॥ [13

मनो-रथः स्याद् इति चिन्तयामि
तथाऽपि बुद्ध्या न[3] वि-तर्कयामि ।
किं कारणं तस्य हि[4] नास्ति रूपं
[18] व्यक्त-स्वरूपं[5] च वदत्य् अय माम् ॥७॥ [14

नमोऽस्तु वाचस्-पतये स-वज्रिणे[6]
स्वयं-भुवे चाऽपि हुताऽशनाय च ।
अनेन चोक्तं वचनं[7] ममाऽग्रतो
[19] वनौकसा यच्च[8] च तथाऽस्तु नाऽन्यथा ॥८॥ [15

इत्यार्षे रामायणे सुन्दर-काण्डे लङ्का-पर्वणि सीता-विषादो[9]
नाम षड्विंशः सर्गः[10] ॥ २६ ॥

---

१ फ–सयित । २ फ अ–न चैव ॥ ३ तु । ४ अ–च । ५ फ–०स्वरूप । व–०सुरूप । फ व अ–भिन्नाः–०स्वरूपश् ॥ ६ आ–०तये स्तु व० । फ–सु० । ७ आ–यदि मे । च रा प्र व म ल$_1$ ल$_2$–यदितो ममाग्रे । ८ च रा प्र व म ल$_1$ ल$_2$–नच्चव ॥ ९ रा–सीताचिन्तन । १० ल$_1$–इति सुन्दरकाण्डे सीतानुचिन्तनं नाम सर्गः । फ प्र व म ल$_1$–नास्ति ॥

## [ सप्तविंशः सर्गः ]



अब्रवीत्[1] स महा-तेजा[1] हनूमान् मारुताऽऽत्म[2]-जः ।
शिरस्य्[3] अञ्जलिम् आ-धाय[3] सीतां मधुरया गिरा ॥१॥
का[4] त्वं कमल पत्राऽक्षि श्यामा[5] कौशेय-वासिनि[6] ।
द्रुमस्य शाखाम् आ-लम्ब्य तिष्ठसि त्वम् अ-निन्दिते ॥२॥
किम् अर्थं तव नेत्राभ्यां वारि स्रवति शोक-जम् ।
पुण्डरीक-पलाशाभ्यां विप्र-कीर्णम् इवोदकम् ॥३॥
का त्वं भवसि रुद्राणां मरुतां वा वराऽऽनने ।
का वसूनां वराऽऽरोहे देवता प्रति-भासि मे ॥४॥
अथ चन्द्र[8]मसा हीना पतिता वि-बुधा[9]ऽऽलयात् ।
रोहिणी[10] ज्योतिषां[10] श्रेष्ठा त्वम् अ-निन्दित-लोचने ॥५॥
रोषाद् वा यदि वा मोहाद् भर्त्तारम् अ-सितेक्षणे ।
वसिष्ठं कोपयित्वेह सं-प्राप्ता त्वम्[11] अरुन्धती[11] ॥६॥
क नु पुत्रः पिता भ्राता भर्त्ता वा ते सु-मध्यमे ।
अस्माल् लोकाद् अमुं लोकं गतं[12] त्वम् अनु-शोचसि ॥७॥
व्य्-अञ्जनानि तु[13] ते यानि लक्षणानि[14] तु[15] लक्षये ।

---

१ फ–तामब्रवीत्पुनर्धीमान् । अ–तामब्रवीत्ततो धीमान् । च रा प्र ब म ल१ ल२–तामब्रवीत म० । २ च–पवना० । ३ अ–शिरसाजलिमादाय । च प्र ल१–०लिमादाय॥४ फ–पा त्व कमलपत्राक्षी । रा ब प्र–सा त्व क०। अ–सा त्व पद्मपलाशाक्षि । ५ रा ब प्र–श्यामे । ६ फ–०वाससी ॥ ७ रा ब म–शोभने । ८ च–चन्द्रसमा । ९ च–वसुधा० । रा प्र ब ल१–वसुधालयम् । ल२–वसुधातलम् । अ–विपुलालय । १० फ रा ब प्र म ल१ ल२–ज्यातिषा रोहिणी ॥ ११ आ अ म–त्वमरुन्धति । प्र–त्वमनिन्दिते । ल१ ल२–त्वमनिन्दिते ॥ १२ फ रा ब म– गता । प्र ल१ ल२–गत्वा ॥ १३. फ अ–च । १४ रा–लक्ष्म० । १५ फ–हि ॥

महिषी भूमि-पालस्य राज-कन्याऽसि मे मता ॥८॥
सुराणाम् अ-सुराणां च नाग-गन्धर्व-रक्षसाम् ।
यक्षाणां किं-नराणां च का त्वं भवसि शोभने ॥९॥
रावणेन जन-स्थानाद् बलात् प्र-मथिता यदि ।
सीता त्वम् असि भद्रं ते तत्त्वम् आ-ख्याहि भामिनि ॥१०॥
सा तस्य वचनं श्रुत्वा राम-कीर्तन-हर्षिता ।
उवाच वाक्यं वैदेही हनूमन्तं द्रुमाऽऽश्रितम् ॥११॥
दुहिता जनकस्याऽहं वि-देहस्य महाऽऽत्मनः ।
सीतेति नाम्ना तस्याऽहं भार्या रामस्य धीमतः ॥१२॥
वत्सरान् द्वादश पुरा राघवस्य नि-वेशने ।
भुञ्जाना मानुषान् भोगान् सर्व-काम-फलान् बहून् ॥१३॥
ततस् त्रयोदशे वर्षे राज्ये त्व् इक्ष्वाकु-नन्दनम् ।
अभि-षेचयितुं राजा सोपाध्यायोऽकरोत् मतिम् ॥१४॥
तस्मिन् सं-भ्रियमाणे तु राघवस्याऽभि-षेचने ।
कैकेयी नाम भर्त्तारं देवी वचनम् अब्रवीत् ॥१५॥
न पिबामि न खादामि प्रत्य्-अहं तव भोजनम् ।
एवं मे जीवितस्याऽन्तो रामो यद्य् अभि-षिच्यते ॥१६॥

---

१ फ अ–त्रा । २ फ रा ब म ल$_1$–त्रा । ३ फ अ–शस मे । ४ प्र–नास्ति ॥ ५ फ अ–तन्मम० । ६ फ भाविनि । म–शोभने । ७ रा ब प्र ल$_1$ ल$_2$–नास्ति ॥ ८ अ–मा च तस्य वच. श्रुत्वा रामकीर्तनकर्षिता । ९ अ–०मुपस्थितम् । फ रा ब ल$_1$ ल$_2$–द्रुमाश्रिता ॥ १० फ–वैदे० । ११ रा–नाम्नास्मि भद्रन्ते भा० । म–नामास्मि भद्रन्ते पत्नी । अ–नाम्ना विख्याता भा० । १२. ल$_2$–नास्ति । १३ अ–वत्सरा । १४ रा ब प्र ल$_1$ ल$_2$–०फलास्त्वयम् ॥ १५ फ च–नेक्ष्वाकुनन्दनः । रा ब प्र म ल$_1$ ल$_2$–चेक्ष्वाकुनन्दनः ॥ १६ ल$_2$–०न् सभूयमाने । अ–अस्मिन् संभ्रि० । १७ ब–०रमिद । १८. फ–मम । च रा ब प्र म ल$_1$ ल$_2$–न च । अ–पानभो० ॥

यत् तद् उक्तं त्वया[1] वाक्यं[1] प्रीत्या नृ-पति-सत्तम ।
तत्[2] ते न[2] वि-तथं कार्यं वनं गच्छतु राघवः ॥१७॥
स राजा सत्य-वाग् देव्या वर-दानम् अनु-स्मरन् ।
मुमोह वचनं श्रुत्वा कैकेय्याः क्रूरम् अ-प्रियम् ॥१८॥
ततस् तु[3] स्थविरो राजा सत्य-धर्मे[4] व्यव-स्थितः ।
ज्येष्ठं यशस्विनं पुत्रं रुदन्[5] राज्यम्[6] अयाचत[6] ॥१९॥
अभि-षेकात् प्रियतरं श्रुत्वा स वचनं पितुः ।
मनसा पूर्वम् आ-साद्य वाचं[7] प्रति[7]-गृहीतवान् ॥२०॥
दद्यान् न प्रति-गृह्णीयान् न ब्रूयात् किञ्चिद् अ-प्रियम् ।
अपि जीवित-हेतोर् हि रामः सत्य-पराक्रमः ॥२१॥
स वि-हायोत्तरीयाणि[8] महाऽर्हाणि महा-यशाः ।
वि-सृज्य मनसा राज्यं जनन्यै[9] मां समा-दिशत् ॥२२॥
साऽहं तस्याऽग्रतस् तूर्णं प्र-स्थिता चीर-वासिनी[10] ।
न हि मे तेन हीनाया वासः स्वर्गेऽपि रोचते ॥२३॥
प्राग् एव महा-भागः सौमित्रिर् मित्र-नन्दनः ।
पूर्व-जस्या[11]ऽनु-यात्राऽर्थं द्रुम-चीरैर् अलङ्कृतः ॥२४॥
ते वयं भर्तुर् आ-देशात्[12] प्राग् एव तु[12] दृढ-व्रताः[13] ।
प्र-विष्टाः स्मो दुरा-धर्षं वनं गम्भीर-दर्शनम् ॥२५॥
वसतो[14] दण्डकाऽरण्ये तस्याऽहम् अ-मितौजसः ।

---

१ फ–त्वया कार्यं। ल$_1$–पुरा वाक्यं । २ अ–तद्धै न । फ–न त्वया॥
३ फ–च। अ–त। ४ आ फ–०धर्मव्य०। अ–०धर्मव्यवस्थितम्। ५ अ–रामं।
६ फ–वाक्यमभाषत। ७ फ–वाचः प्र०। च रा अ–वाचा प्र०। ब प्र म ल$_1$ ल$_2$–वाचा परिगृ० ॥ ८ फ–विवाहोत्त०। ९ आ–जनन्यौमी। फ–जनन्यै तत् ॥
१० आ–०वाससः। म–०वासनी। ११ च–०जस्य तु या०। रा–०जस्य च या०॥
१२. फ अ–०देश बहु मत्वा। रा ब प्र म–०देश प्रा०। १३. ल$_2$–महाव्रता ।
१४ आ–वसन्तो ।

रक्षसाऽप-हृता भार्या रावणेन दुर्-आत्मना ॥२६॥
द्वौ मासौ तेन मे कालो जीविताऽनु ग्रहे[1] कृतः ।
ऊर्द्ध्वं द्वाभ्यां तु मासाभ्यां ततस् त्यक्ष्यामि जीवितम् ॥२७॥
रावणो वि-कृताऽऽकारो राक्षसो[2]ऽति-भयंकरः ।
समुद्र-पारो दुष्-प्रा[3]ऽऽपः कालः परि-मितश्[4] च[5] मे ॥२८॥

इत्यार्षे रामायणे सुन्दर-काण्डे सीता-वाक्य
नाम सप्तविंशः सर्गः ॥२७॥

---

१ आ–॰नुग्रह । २ फ–॰सो हि भयानक. । अ–॰तिभयानकः ।
३. फ–दुष्प्राप्यः । ४ ल२–पारिणितश्च ॥ ५ फ–सर्गसमाप्तिर्नास्ति ॥

तस्यास् तद् वचनं श्रुत्वा हनूमान् हरि-यूथ-पः ।
२५] दुः[1]खं दुःखाऽभि-भूताया वाक्यम उत्तरम् अब्रवीत्॥१॥
त्वां मार्गमाणा रामा[2]ऽर्थे क्लिश्य[3]न्ते दिक्षु[4] वानराः ।
N] तैस् तैस् तपोभिर् नि-य[5]मैः सिद्धिं मुनि-गणा इव ॥२॥[6]
रघूणां च हरीणां च प्राणास् त्वयि समा-हिताः ।
N] सा त्वं दिष्ट्या[7] मया दृ[8]ष्टा नास्ति धन्यतरो मम॥३॥[6]
अहं रामस्य सं-देशाद् देवि[9] दूतः समा-गतः ।
२६] वैदेहि कुशली राम[10]स् त्वां च[10] कौशल्यम् अब्रवीत् ॥४॥[6]
दाता भोक्ता प्र-हर्त्ता च श्रेष्ठो लोके धनुर्-धरः ।
यो ब्राह्मम् अस्त्रं दैवं च[11] वेद वेद-विदां-वरः ।
N] स त्वां दाशरथी रामो देवि कौशल्यम् अब्रवीत् ॥५॥
ल[12]क्ष्मणश् च[12] महा-तेजा भर्त्तुस् तेऽनु-चरः प्रियः ।
२७] कृ[13]तवान् शोकं[13]-सन्तप्तः शिरसा तेऽ[14]भि-वादनम् ॥६॥
सा तयोः कुशलं देवी [15]वीरयोर् नर-सिंहयोः ।
N] श्रु[16]त्वा संहृष्ट-सर्वाऽङ्गी हनूमन्तम् अथाऽब्रवीत् ॥७॥

---

१ ब प्र म ल$_1$ ल$_2$–महादुःखाभि० ॥ २ च–रामार्थं । ३. ल$_2$–दृश्यन्ते । अ–क्लिश्यन्ति । ४ प्र–ऋक्षवा० । ५ च रा प्र ब म ल$_1$ ल$_2$–क्षुत्तृष्णाभ्यां परिश्रान्ता । ६ फ–नास्ति ॥ ७ अ–दृष्टा मया दिष्ट्या । ८ रा म अ–मया ॥ ९ ब–देव । १० ब–राम. स त्वा ॥ ११ फ–तु ॥ १२ फ–लक्ष्मणस्तु । १३ आ–कृतवां शो० । फ–कृतवाञ्छोक० । १४ आ फ–चाभि० ॥ १५ फ–निशम्य । १६ फ अ–प्रीतिसं० ॥

कल्याणं[1] तव गाथेयं लौकिकी प्रति-भाति मे ।
N] ऐति[2] जीवन्तम् आनन्दो नरं वर्ष-शताद् अपि ॥८॥
ततः संजात-विश्रम्भौ[3] सीता शशि-निभाऽऽनना ।
तया समा-गतश्च चाऽपि हनुमान् प्रीतिमान् बभौ ।
N] परस्परेण चाऽऽलापं[4] वि-श्वस्तौ[5] तौ प्र-चक्रतुः ॥९॥
तस्यास्[6] तु[6] वचनं श्रुत्वा हनुमान् मारुता[7]ऽत्म-जः ।
N] सीतायाः शोक-दीनायाः[8] समीपम् उप-चक्रमे ॥१०॥
यथा समीपं सीताया हनुमान् उप-सर्पति ।
N] तथा रावणं इत्य् एवं सा सीता[9] पर्य्-अशङ्कत[10] ॥११॥
अहो धिक् किं कृतम् इदं कथितं[11] हि यद् अद्य मे ।
N] रूपाऽन्तरम् उपाऽऽगम्य स[12] एवाऽयं हि रावणः ॥१२॥
ताम् अ-शोकस्य शाखां तु मुक्त्वा सा शोक-कर्षिता ।
N] भयात्[13] तस्याऽनवद्याऽङ्गी धरणायां सम् उपाऽऽविशत् ॥१३॥
अवन्दत[14] स[14] महा-बाहुस् ततस् तां जनकाऽऽत्म-जाम् ।
N] सा चैव भय-सन्त्रस्ता[15] भूयो नैवाऽभ्य् उद्-ऐक्षत ॥१४॥
तं दृष्ट्वा वन्दमानं[16] तु सीता चन्द्र-निभाऽऽनना ।

---

१ आ-०व गाथे च । फ-कल्याणी वनगा० । २ फ रा-पति-जी० । आ-प्रतिजी० ॥ ३ फ-०विश्वासा । ४ ब ल$_1$ ल$_2$-वाचाल्य । प्र-वाचाल । ५ आ-०स्तौ तु । अ-विश्रब्धौ तु ॥ ६ फ अ-तस्या-स्तद् । प्र ल$_1$ ल$_2$-ततस्तद् । ७ फ अ-हरियूथप । ८ फ-०तप्तायाः ॥ ९ फ-दृष्ट्वा विशालाक्षी सीता त । आ च-रावणमित्येव । १० आ-अभि० ॥ ११ फ रा ब म ल$_1$ ल$_2$-यदद्य कथित हि । १२ अ-सर्व-थाय हि । म ल$_1$ ल$_2$-स एवायाति । १३ फ-भयत्रस्तान० ॥ १४ फ-अवन्दत । १५ फ अ-भयवित्रस्ता ॥ १६ आ-वन्दमानम् । फ-वन्द्यमानम् । म-वर्धमान ।

३३] अब्रवीद् दीर्घम् उच्छ्वस्य[1] वानरं मधुर-स्वरम्[2] ॥१८॥
मायां प्र-विष्टो मायावी यदि त्वं रावणः स्वयम् ।
३४] सं[3]-तापयसि[3] मां भूयः सं-तप्तां तन् न शोभनम्॥१६॥
३६३] चि[4]त्तं जिहीर्षसे यत् त्वं[4] नदी[5]-कूलम् इवाऽम्भसा[5] ।
अहो स्वप्नस्[6] तु सुख-दो यो[6]ऽहम् एवं-विधा[7] हृता[7] ।
३८] प्रेषितं नाम[8] पश्यामि राघवेण[9] वनौ[10]कसम्[10] ॥१७॥
स्वप्ने[11]ऽपि यद्य् अहं[11] वीरं राघवं सह-लक्ष्मणम् ।
३९] पश्येयं न वि-षीदेयं स्वप्नो[12] मम न[12] मत्सरी ॥१८॥
ना[13]ऽहं स्वप्नम् इमं[14] मन्ये स्वप्ने दृष्ट्वा हि वानरम् ।
३७] न शक्योऽभ्युद्-अयःप्राप्तुं प्राप्तश् चाऽभ्युद्-अयो मया१९॥
किं तु मे चित्त-मोहो[15]ऽयं भवेद् वात-गतिस् त्व् इति[15] ।
४०] उन्-मादो वा विकारो वा स्याद् वेयं[16] मृग-तृष्णिका॥२०॥
अथवा नाऽयम् उन्-मादो मोहोऽप्य्[17] उन्माद[17]-लक्षणः ।
४१] सं-बुद्ध्ये चाऽहम् आत्मानम् इमं चाऽपि वनौकसम् ॥२१॥
इत्य्-एवं बहु-धा बुद्ध्वा संप्र-धार्य बलाऽबलम् ।
४२] रक्षसां काम-रूपाणां[18] मन्ये[18] तं राक्षसाऽधिपम् ॥२२॥[19]

---

१ आ—उत्स्वस्य । २ आ—चिन्तय नु वच । अ—०रस्व राम् ॥ ३ ब प्र ल$_1$ ल$_2$ अ—उन्मादयसि ॥ ४ रा ब प्र ल$_1$ ल$_2$—त्वं चेजिहीर्षसि पुन । अ—स्थितजिहीर्षसेऽनार्यं । फ—०र्षसेऽनाय । ५ रा ब प्र म ल$_1$ ल$_2$—संतप्ता तन्न शोभनम् । ६ फ—स्वप्नस्य सुखतो योह । अ—स्वप्नस्य सुषता याह । ७ आ—चिराद्हृता । फ—चिराकृता । प्र अ—०धा हता । ८ अ—तत्र । ६ अ ब म—भिन्ना—रावणेन । १० अ—०कसाम् ॥ ११ फ—स्वप्नेप्यह यदा । १२. फ—स्वप्नेऽपि मम म० ॥ १३ ब—अहो । १४ प्र—अह ॥ १५. फ—०मोहस्सभवेद्वातगतिः स्वयम् । च रा ब प्र ल$_1$ ल$_2$—०तिस्त्विय । १६ फ च अ—इदं ॥ १७ आ—०हो ह्युन्मा० ॥ १८. फ म अ—०रूपत्वान्मेने । १६ च—नास्ति ॥

४३उ] एवं बुद्धिं ततः[1] कृत्वा सीता सा तनु-मध्यमा ।
४३पू] अजिज्ञासत् ततो[2] भूयो वानरं जनकाऽऽत्म-जा ॥२३॥[3]
सीतायाश् च मतं[4] बुध्वा हनूमान् हरि-यूथ-पः[5] ।
४५] श्रोत्राऽनुकूलैर् वचनैस् तथ्यैस् तां प्रत्य-अनन्दयत्[6] ॥२४॥
स[7] च[7] विग्रह-वान् धर्मः साधुः सत्य-परिश्रयः ।
४६] परि-त्राता च[9] सर्वस्य[9] सर्व-भूत-हिते-रतः ॥२५॥
बलवान् मातरिश्वेव महेन्द्र इव दुर्-जयः ।
४७] आदित्य इव तेजस्वी लोक-कान्तो यथा शशी ॥२६॥
राजा सर्वस्य लोकस्य रामो वैश्रवणो यथा ।
४८] त्रि-क्रमेणोप[10]-पन्नश् च यथा विष्णुर् महा-यशाः ॥२७॥
सत्य-वादी मधुर-वाग् देवो वाचस्-पतिर् यथा ।
४९] रूपवान् सु-भगः श्रीमान् कन्दर्प इव मूर्तिमान् ।
क्रोध-स्थाने प्र-हर्ता च श्रेष्ठो लोके धनुष्मताम् ॥२८॥
५०] बाहु-च्छायाम् अव-ष्टभ्य यस्य लोको महाऽऽत्मनः ।
N] देवा इव महेन्द्रस्य मोदन्ते वि-गत-ज्वराः ॥२९॥
तं तादृशम् अना-धृष्यं देवानाम् अपि दुर्-जयम् ।
N] महेन्द्र-सदृश शौर्ये क्षमयां[16] ब्रह्मणा समम् ॥३०॥[17]

---

१ फ–तथा । २ व–भिन्ना.—जिज्ञासती तदा । ३ च–नास्ति ॥ ४.फ–सीतायास्त्वेव तद बु० । अ–सीतायास्तु म० ॥ ५ फ च अ–मारुतात्मज. । ६. अ–समहर्षयत् । फ च रा व म–प्रत्यहर्षयत् ॥ ७.फ च रा व म अ–य स । ८ फ व म–०रिश्वव । अ–०पराक्रम । ९ अ–प्रदाता च । फ–च दाता च ॥ १०. आ रा च ल₁ अ–०मेनोप० ॥ ११ फ अ–स्थाने क्रोधप्र० । १२ फ अ–महारथ । च–धनुर्धर. ॥ १३ अ–समाश्रित्य यस्य लोको । १४ व–समुद्रस्य ॥ १५ अ–न तादृश्य । १६ फ–पराक्रमे विष्णुसम क्षमाया ॥ १७ अ–कोषेऽत आरभ्य “ आदित्य इव तेजस्वी ” इत्यादित्यक्त पाठ पठित ॥

अप-कृष्याऽऽश्रमात् तं तु मृग-रूपेण राघवम्[1] ।
N] येनाऽप[2]-नीता शून्ये त्वं फलं द्रक्ष्यति तस्य सः[3] ॥३१॥
N] कुपितो रावणं सङ्ख्ये घातयिष्यति वीर्यवान् ।
५२] रोष[4]-मुक्तैः शरैस् तीक्ष्णैर् ज्वलद्भिर् इव पावकैः ॥३२॥
तेनाऽहं प्रेषितो दूतस् त्वत्-सकाशम् इहाऽऽगतः ।
५३] त्वद्-वियोगेन दुःखाऽऽर्त्तः[5] स त्वां कौशल्यम् अब्रवीत् ३३॥
लक्ष्मणश् च महा-तेजाः सुमित्राऽऽनन्द-वर्धनः[6] ।
५४] अभि-वाद्य महा-बाहुः स त्वां कुशलम् अब्रवीत्[7] ॥३४॥
रामस्य च सखा वीरः सु-ग्रीवो नाम वानरः ।
५५] राजा वानर-मुख्यानां स त्वां कौशल्यम् अब्रवीत्॥३५॥
नित्यं स्मरति रामस्[8] ते सु-ग्रीवश् च स-लक्ष्मणः ।
५६] दिष्ट्या जीवसि[9] वैदेहि राक्षसी-वशम् आ-गता ॥३६॥
न चिराद् द्रक्ष्यसे[10] रामं लक्ष्मणं च महा-रथम् ।
५७] मुख्यं[11] वानर-कोटीनां सु-ग्रीवं च महौजसम् ॥३७॥
अहं सु-ग्रीव-सचिवो हनूमान् नाम वानरः ।
५८] दूतोऽहं राज-सिंहस्य रामस्याऽक्लिष्ट-कर्मणः ॥३८॥
त्वत्-सकाशम् अनु-प्राप्तो रामस्याऽऽदेशतो[12] ह्य् अहम् ।
५९] प्र-विष्टो नगरीं लंकां लङ्घयित्वा महोदधिम् ॥३९॥[13]

---

१. फ–रावण. । २. फ च रा–शून्ये येनापनीतासि । अ–सीता येनापनीतासि । ३ आ प्र म $ल_1 ल_2$–द्रक्ष्यसि तस्य च । अ–द्रक्ष्यसि त०॥ ४ फ–रोषप्रयुक्तैरिषुभि. ॥ ५ फ–शोकार्तः ॥ ६ अ–०वर्धनिः । ७ प्र म $ल_1 ल_2$ अ–कौशल्यमब्र० ॥ ८ फ–रामस्त्वा सुग्रीव सहल० । अ–रामश्च सु० । ९ फ–०ति ॥ १० फ अ–०सि पति । ११ फ च अ–मध्ये । आ–मुखं ॥ १२ फ–रामवाक्यप्रचोदितः । च–रामवाक्यप्रदेशत. । १३. अ–नास्ति ॥

मूर्ध्नि[1] दत्त्वा पद-न्यासं रावणस्य दुर्-आत्मनः ।
६०] त्वां द्रष्टुम् उप-यातोऽहं स्वम् आ-श्रित्य पराक्रमम् ॥४०॥
नाऽहम् अस्मि तथा देवि यथा त्वम्[2] अव-गच्छसि ।
६१] वि-शङ्का भव वैदेहि श्रद्धेहि वदतो[3] मम ॥४१॥
तं पुष्प-वर्षैर् अभि-वृष्यमाणं[4]
महा-बलं तत्र तदा नि-षण्णम् ।
कुतूहलाद्[5] हर्ष-परिप्लुताऽक्षी[6]
सीताऽप्य्[7] अगच्छत् त्वरिता समीपम्[8] ॥४२॥

इत्यार्षे रामायणे सुन्दर-काण्डे[9] हनुमद्-भाषण[10]
नामाऽष्टाविंश सर्गः ॥२८॥

---

१ फ च अ-कृत्वा मूर्ध्नि ॥ २ फ अ-माम् । ३ अ-वचनं ॥ ४ आ-वर्षमाण । च रा प्र ब-०र्ष्यमान । ५ फ-कौतू० । ६ फ-०ताग्नी । ७-व प्र म ल१-सीताभ्यग० । ८. फ-हरीश । अ-हरिं त ॥ ९ फ-०ण्डे द्विग्विजये ह० । १० ल२-०मत्संभाषण । अ-०मतो भाषणो ॥

तां तु राम-कथां श्रुत्वा वैदेही वानरर्षभम् ।
१] उवाच वचनं तत्त्वम्[1] इदं मधुरया गिरा ॥१॥[१

क ते रामेण स-सर्गः कथं जानासि लक्ष्मणम् ।
२] नराणां वानराणां च कथम् आसीत् समा-गमः ॥२॥ [२

यानि रामस्य लिङ्गानि तानि मे वद[2] वानर ।[3]
N] तानि भूयः समा-चक्ष्व न मां[4] शङ्का समाविश (?शे)त् ३॥[5][३

कीदृशं तस्य सं-स्थानं रूपं रामस्य कीदृशम्[6] ।
३] कथम् ऊरू कथं बाहू लक्ष्मणस्य च शंस मे ॥४॥ [४

एवम् उक्तस् तु वैदेह्या हनूमान् मारुताऽऽत्म-जः
४] ततो रामं यथा-तत्त्वम् आ-ख्यातुम् उप-चक्रमे ॥५॥ [५

जानन्ती[7] बत[8] वैदेहि दिष्ट्या मां परि-पृच्छसि ।
५] भर्त्तुः कमल-पत्राऽक्षि सं-स्थानं लक्ष्मणस्य च ॥६॥[9] [६

यानि[10] रामस्य लिङ्गानि[11] लक्ष्मणस्य च यानि वै[12] ।
N] लक्षितानि विशालाऽक्षि तानि मे[13] शृणु तत्त्व-तः ॥७॥[14][७

रामः कमल-पत्राऽक्षः सर्व-भूत-मनो-हरः ।[८पू
N] गुणवान् शील-सम्पन्नः सर्व-भूत[15]-हिते रतः ॥८॥[1] [N

---

१. अ- सीता त्विदं । २. फ च प्र ब म ल१ ल२ अ–लक्ष्मणस्य च । ३ अत परमधिकः पाठ –आ–मुखमूरू कथं बाहू लक्ष्मणस्य च वानर ॥ ४. फ च–मा शोकः । प्र ल२–मे शङ्का । म–मे शोकः । ५ रा–नास्ति ॥ ६. ल१–कीर्तन ॥ ७. फ–जानाना । अ–जानासि । ८ फ–बत दिष्ट्या मां वैदेहि । अ–तावदिष्ट्या त वैदेहि । ल१–०हि दृष्ट्या मां । ९. अ–नास्ति ॥ १०. फ–देवि । ११. च प्र ब म ल१ ल२–चिह्नानि । १२ फ–मे । १३. फ–वै । १४. रा अ–नास्ति ॥ १५ फ–०तमनोहरः । म ल१ ल२–सर्वलोकहि० ॥

रूप-दाक्षिण्य[1]-सम्पन्नः प्रांऽशुः[2] सं जनकाऽऽत्म-जे । [८उ

N] तेजसाऽऽदित्य-सङ्काशः क्षमया पृथिवी-समः ॥९॥

बृहस्पति-समो बुद्ध्या यशसा वासवोपमः ।

N] रक्षिता स्वस्य वंशस्य स्व[3]-जनस्य च रक्षिता[3] ॥१०॥[4] [१०पू

रामो भामिनि सर्वस्य चतुर्-वर्णस्य रक्षिता ।

N] मर्यादानां[5] च[6] लोकस्य कर्त्ता स्थापयिता विभुः[6] ॥११॥ [११

७उ] अर्चिष्मान् अर्चितव्योऽसौ[7] ब्रह्मचारि-व्रते स्थितः ।

८पू] साधूनाम् उपचार-ज्ञः प्रचार-ज्ञश् च कर्म्मणाम् ॥१२॥ [१२

६उ] राज-विद्या[8]-विनीतानां ब्राह्मणानाम् उपाऽऽसिता ।

N] श्रुतवान्[9] शील-सम्पन्नो वि-नीतश् च परन्तपः ॥१३॥ [१३

ऋजुर्[10] वेद-विनीतश् च वेद-विद्भिः[11] सु-पूजितः[11] ।

९] धनुर्-वेदे च वैदेहि[12] वेदाऽङ्गेषु च नि-ष्ठितः ॥१४॥ [१४

वि-पुलांऽसो[13] महा-बाहुः कम्बु-ग्रीवः शुभाऽऽननः ।

१०] गूढ-जत्रुः[14] स ताम्राऽक्षो रामो नाम जनैः श्रुतः ॥१५॥ [१५

८उ] दुन्दुभि-स्वन-निर्घोषः स्निग्ध-वर्णः प्र-तापवान् ।

समः सम-विभक्ताऽङ्गो गुरुर्[15] गूढ-शिरोऽस्थि-कः ॥१६॥ [१६

११] चतुष्-किष्कुश् चतुर्-दण्डो[16] द्विः-शुक्लो दश-पद्मवान् । [१८उ

षड्-उन्नतो दश-बृहंस् त्रिभिर् व्य्-आप्नोति राघवः ॥१७॥ [N

---

१. फ–गुणवान् रूपस० । २. च ब प्र म ल१ ल२–प्रांशुश्च ॥ ३. फ अ–धर्मस्य च परन्तप. । ४ च–नास्ति ॥ ५. आ–०दातीव । ६. फ अ–हि सः । च रा प्र ब म ल१ ल२–च स. ॥ ७. च रा प्र ब म ल१ ल२–०व्योयं । ८. ल२–राजराजो वि० । ९. रा–श्रुत० । १०. अ–ययुर्वेद० । ११. फ प्र ल१ ल२ अ–वेदविद्भिश्च । १२. फ च रा प्र ब म ल१ ल२–वेदे च वे० । आ–०ङ्गे च विनिष्ठितः । च–०ङ्गे च प्रतिष्ठितः । अ–सर्वाङ्गे वेदेषु च सुनि० ॥ १३. च म–०लांशो । १४. आ रा ब म ल१ ल२–०जानुः । १५. फ–गूढो ॥ १६. आ–चतुर्दंष्ट्रो ॥

१२] त्रि-वलीवा(?मा)न्[1] त्रि-नीतश् च चतुर्-गन्धस् त्रि-कालवित् १८पू
त्रि-त्रिकस्[2] त्रि-प्रलम्बश् च महाऽऽस्यो[3] घन-निःस्वनैः[4]१८[१७पू
१३] चतुः-कृष्णश् चतुर्-लेखः षोडशार्द्धः[5] चतुः-समः । [N
चतुर्दश-सम-द्वन्द्वः पञ्च-स्निग्धो[6]ऽष्ट-वंशवान् ॥१९॥ [१९पू
१४] भ्राता वै-मात्रिकश्[7] चा[8]ऽस्य सौमित्रिर् अ-पराजितः ।
१८पू] अनु-रागेण रूपेण गुणैश् चाऽपि तथा-विधः ॥२०॥ [२२
स तु धर्म्म-रतः श्रीमान् सं-ग्रहाऽनु-ग्रहे रतः ।
N] नि-यतः सर्व-लोकानां सर्व-काल[10]-प्रियं-वदः ॥२१॥ [N
रावणेनाऽप-नीतां त्वां श्रुत्वा दीनस् तु राघवः ।
१७] अन्व्-इष्टवांस् तदा[11] शूरो जन-स्थानं[12] ततस्-ततः ॥२२॥ [N
त्वाम् एव मार्गमाणौ तौ वि-चरन्तौ वसुं-धराम् ।
१८] ददृशाते[13] च सु-ग्रीवं पूर्व-जेनाऽव-रोपितम् ॥२३॥ [२४
प्रस्थे च ऋष्य-मूकस्य रम्ये पादप-संकुले[14] ।
N] भ्रातुर् भयाऽऽर्त्तम् आ-सीनं सु-ग्रीवं शुभ[15]-दर्शनम् ॥२४॥ [२५
वयं तु कपि-राजानं सु-ग्रीवं सत्य-सङ्गरम्[16] ।
N] परि-चार्या[17]ऽऽस्महे राज्यात् पूर्व-जेन[18] परा-जितम् ॥२५॥ [२६

---

१. फ—०लीत्रिविनतिश्च । ब—०लीत्रिभिर्विहीनश्च । अ—०लीवांस्त्रि-विनतः । २. अ—त्रिवक्रस् । ३. अ—०स्योष्ठहनुस्वनः ॥ ४. फ—०शाक्तः । ५ अ—०मद्वद्वं । च रा प्र म $ल_1$ $ल_2$—०समाद्वन्द्वः । ६. फ—स्नेहोष्टवं०' । ब—सूक्ष्मोष्टव० । प्र—०ष्टवेश० ॥ ७ अ—०कस्तस्य । ब—चास्य च वैमात्रः । ८. अ ब—०त्रिश्चाप० ॥ ९. फ अ—०परः । १०. अ—०लोक० ॥ ११. च—तथा । रा प्र ब म $ल_1$ $ल_2$—ततः । १२ फ—०स्थाने ॥ १३. आ—अद्राक्षं कपिराजानं । अ—अद्राष्टा कपिराजानं । च—अद्रष्ट्वा ते च सु० । १४. च रा प्र म $ल_1$ $ल_2$—०रम्यया । १५ च रा प्र म—प्रिय० ॥ १६. च ब अ—प्रिय-दर्शनम् । रा प्र म—०व हि तत्परम् । १७ च रा ब प्र अ—०चार्यास्महे । १८. च रा प्र ब अ—०जेनावरोपितम् ॥

ततस् तौ[1] चीरं[2]-संवीतौ धनुः-प्रवर-धारिणौ ।<br>
N]ऋष्य-मूकस्य शैलस्य रम्यं देशम् उप[4]-स्थितौ ॥२६॥ [२७<br>
तौ मार्गमाणौ नृ-वरौ वनं गम्भीरम् ओजसा ।<br>
N] सु-ग्रीवो दूरतोऽपश्यत् सह तैर् वानरर्षभैः[5] ॥२७॥ [N<br>
स[6] तौ दृष्ट्वा नर-व्याघ्रौ धन्विनौ वानरर्षभः ।<br>
N] अभि-प्लुतो गिरेस् तस्य शिखरं[7] भीम-विक्रमः ॥२८॥ [२८<br>
ततः स शिखरे तस्मिन् वानरेन्द्रो व्यव-स्थितः ।<br>
N] तयोः समीपं माम् एव प्रेषयामास स-त्वरम्[8] ॥२९॥[9] [२९<br>
ताव् अहं पुरुष-व्याघ्रौ सुग्रीव-वचनात् प्रभू ।<br>
N] रूप-लक्षण-सम्पन्नौ कृताऽञ्जलिर् उप-स्थितः ॥३०॥[10] [३०<br>
तदाऽस्मि राघवेणोक्तः[11] शोकाऽऽर्त्तेन महाऽऽत्मना ।<br>
N] हरणं तव वैदेहि राक्षसेन दुर्-आत्मना ॥३१॥[12] [N<br>
तौ परिज्ञात-तत्त्वाऽर्थौ मया प्रीति-समन्वितौ ।<br>
N] पृष्ठम्[13] आ-रोप्य तं देशं प्राऽऽपितौ पुरुषर्षभौ[14] ॥३२॥ [३१<br>
नि-वेदितं[15] च तत्त्वेन सु-ग्रीवाय महाऽऽत्मने ।<br>
N] तेषाम् अन्योऽन्य-संवादाद्[16] भृशं प्रीतिर् अजायत ॥३३॥ [३२<br>
तत्र तौ प्रीति-सम्पन्नौ हरीऽऽश्वरैर्[17]-नरेश्वरौ ।<br>
N] परस्पर-कृताऽऽश्वासौ कथया पूर्व-वृत्तया ॥३४॥ [३३<br>
तं[18] तथाऽऽश्वासयामास सु-ग्रीवं लक्ष्मणाऽग्र-जः ।

---

१. प्र ब ल$_1$ ल$_2$–तु । २. ब म–धीर० । ३ फ–नास्ति । ४. फ–उपागतौ ॥ ५ प्र–तौ वानरर्षभौ ॥ ६ म–तौ तु । ७ आ–शिषरं । च रा प्र ब म–शिषरे ॥ ८ आ–सत्वरः । ९ ल$_1$–नास्ति ॥ १० ल$_2$–नास्ति ॥ ११. आ–०वेनोक्त. । १२. च रा ब प्र ल$_1$ ल$_2$ अ–नास्ति ॥ १३ फ–पृष्ठेनारोप्य । १४. अ–च नरर्षभौ ॥ १५ फ अ–०दितौ । १६ अ फ–०सलापाद् । आ–संवादादुशती रजा० ॥ १७. ब प्र म ल$_1$ ल$_2$–नरेश्वरहरीश्वरौ ॥ १८. आ फ रा–०मान्त्वयामास । अ–ततश्च मान्त्व० ।

N] स्त्री-हेतोर् वालिना[1] भ्रात्रा निर्-अस्तम्[2] उग्र-तेजसा ३५ [३४
तत्राऽऽर्थे[3] हरणं तस्मै सौमित्रिर् अति-[4]वीर्यवान् । [N
N] लक्ष्मणो वानरेन्द्राय सु-ग्रीवाय न्य्-अवेदयत्[5] ॥३६॥ [३५उ
स श्रुत्वा वानरेन्द्रस् तु लक्ष्मणेनेरितं वचः ।
तथाऽऽसीन् निष्-प्रभोऽत्य्-अर्थं ग्रह-ग्रस्त[6] इवोडु-राट्[7] । [३६
N] स तस्याऽनाशयच् छोकं रामस्याऽक्लिष्ट-कर्म्मणः॥३७॥ [N
३२पू] ततस् ते गात्र-शोभीनि हृताया[8] राक्षसेन तु ।
N] यान्य् आभरण-जातानि वि-[9]क्षिप्तानि मही-तले ॥३८॥ [३७
तानि सर्वाणि सं-हृत्य रामाय हरि-यूथ-पः[10] ।
N] सं-हृष्टो दर्शयामास[11] गतिं तु न विदुस् तत्र[12] ॥३९॥ [३८
३२उ] तानि रामाय दत्तानि मयैवोप-हृतानि[13] च ।
N] स्वन-वन्ति वि-कीर्णानि[14] तस्मिन् विहत-चेतसि[15] ॥४०॥ [३९
तान्य् अङ्के दर्शनीयानि कृत्वा बहु-विधं तदा[16] ।[17]
३३] हृदि देवि प्र-काशं[18] मे देहीऽति[19] करुणं चिरम्[20] । [४०
N] परि-देवितम्[21] आर्येण शोकोप-हत-चेतसा[22] ॥४१॥[23] [N

---

१. फ—वलिना । २. आ—निरस्तोऽमितते॰ । रा प्र ब म ल२—अमितौजसम् । फ—गुरुतेजसा ॥ ३. आ फ—॰र्थे । ४ फ—अथ वी॰ । ५ आ अ—निवे॰ ॥ ६. फ—ग्रहाक्रान्त । ७ प्र—इवोडुप । म—इवेन्दुराट् ॥ ८. आ—रक्षसा ह्रियमाणया । ९ फ अ—निक्षि॰॥ १० फ रा प्र ब म ल२—॰पाः । ११. फ च रा प्र ब म ल१ ल२—सहृष्टा दर्शयामासुः । १२. फ—तथा ॥ १३ प्र ल१ ल२—॰यैवाप॰ । १४ फ अ—स्वनवन्त्यवकी॰ । १५. रा प्र ब म ल१ ल२—ततो विपुलचेतसा । १६ आ—स बहुवित्तदा । १७. प्र—नास्ति । १८ फ च—देवि देवप्रकाशेन । अ—तेन देवप्रकाशेन । रा म ल१ ल२—देवि दे॰ । आ—॰वप्रकाशेथ । १९ आ च—देवीति । फ—देवेन । अ—देवेति । २०. फ अ—परिदेवितम् ॥ २१ आ—प्रत्यदेवयदाविष्टः । २२ फ—पर्यदेवयदाविष्टः । फ—॰चेतनः । आ—तत्रोपहतचेतन॰ । २३. प्र अ—नास्ति ॥

पश्यतस् तस्य रुदतस् तप्यतश् च पुनः पुनः।
N] प्राऽज्वालयन् दाशरथेस् तानि शोक-हुताऽशनम्॥४२॥ [४१
शोचितं सु-चिरं तेन दुःखाऽऽर्तेन महाऽऽत्मना।
३४] मया स वि-विधैर् वाक्यैः कृच्छ्राद् उत्थापितः पुनः ४३॥[४२
तानि दृष्ट्वा महाऽर्हाणि दर्शयित्वा मुहुर् मुहुः।
N] राघवः सह-सौमित्रिः सु-ग्रीवम् उप-तापयेत्॥४४॥[४३
तवाऽदर्शन-जेनाऽऽर्ये राघवः परि-तप्यते।
३५] महता ज्वलता नित्यम् अग्निनेवोच्च-पर्वतः॥४५॥ [४४
त्वत्-कृते मदनश् चैव शोकश् चिन्ता च राघवम्।
३६] तापयन्ति महाऽऽत्मानम् अग्न्य्-आगारम् इवाऽग्नयः ४६॥[४५
तवाऽदर्शन-जेनाऽऽर्ये शोकेन च वि-चाल्यते।
३७] महा-भूमि-चलेनैव शिला-धातु-सखोऽचलः॥४७॥ [४६
तानि रम्याणि पश्यन् स काननानि महान्ति च।
३८] रतिं न विन्दते रामस् त्वाम् अ-पश्यन् नृपाऽऽत्म-जे ४८॥[४७
सहितौ राम-सुग्रीवाव् उभाव् अकुरुतां ततः।
N] समयं वालिनं हन्तुं तौ तवाऽन्वेषणाय च॥४९॥ [४९

---

१. आ फ अ–पश्यतस्तानि। प्र–पश्यतो रुदतस्तस्य। २ फ–तस्य तच्च। आ–तव तस्य। ३ फ–दर्शयतस्॥ ४. आ–यथा। ५. फ–च॥ ६. फ–उपपादयत्। म ल१–उदपादयत्। अ–उपतापयत्। ७ ल२–नास्ति॥ ८. ल१–तावद्दर्शन०। ९. आ ल१–चतुर्भिः प०। म–चतुर्भिः परिताप्यते। १०. फ–०नेवाग्निप०। च रा प्र ब म ल१–नेव हि प०॥ ११. आ–०गाराय चाग्नयः। १२. अ–नास्ति॥ १३. प्र–०जेनापि। १४ म–परिचा०। अ–तु वि०। १५ आ–०तुरिवाचल.। ल१–०तुमयोचल॥ १६ अ–नृपात्मजः। ब म–०श्यन्ननिन्दिते। १७ अतः परमधिकः पाठः–म अ–स त्वा मनुजशार्दूलः क्षिप्रं द्रक्ष्यति राघव। समित्रबान्धवं हत्वा रावणं जनकाऽऽत्मजे॥ १८. अ–तदा०।

ततो नि-हत्य तरसा रामो वालिनम् आहवे ।
२०] सर्वर्त्त-हरि-सैन्यानां[1] सु-ग्रीवम् अकरोत् पतिम् ॥५०॥ [५१
राम-सुग्रीवयोः सख्यं देव्य् एवं सम्-अजायत ।
N] हनुमन्तं च मां विद्धि तयोर् दूतम् इहाऽऽगतम् ॥५१॥ [५२

इत्यार्षे रामायणे[2] सुन्दर-काण्डे[3] सीता-सम्भाषणो
नामैकोनविंशः सर्गः ॥२९॥[4]

---

१. फ अ–०रिसिहानां ॥ २ रा प्र–त्रुटितः पाठः । ३. म ल$_2$–०ण्डे लकापर्वणि सी० । ४ फ अ–सर्गसमाप्तिर्नास्ति ॥

स राज्यं प्राप्य सु-ग्रीवः समा-नीय हरीऽऽश्वरान् ।
२१] त्वद्-अर्थे प्रे(?प्रै)षयत् सर्वान् दिशो दश महा-बलान्[2]॥१॥[५३
आ-दिष्टा वानरेन्द्रेण सु-ग्रीवेण[3] महाऽऽत्मना ।
N] अद्रि-राज-प्रतीकाशाः सर्व-तः प्र-स्थिता महीम्॥२॥ [५४
अङ्गदो नाम लक्ष्मीवान् वालि-सूनुर् महा-बलः ।
N] प्र-स्थितः कपि-शार्दूलस् त्रि-भाग-बल-संवृतः ॥३॥ [५६
वि-चित्य दक्षिणाम् आशां स-शैल-वन-काननाम् ।[4]
N] गिरि-जालाऽऽवृतां दुर्गां प्रायस् तेन वि-चिन्महे ।[5]
२२उ] त्वां देवि राघवस्याऽर्थे स[6]र्व-तो मृगयामहे ॥४॥ [N
तेषां [7]नो विप्र-नष्टानां विन्ध्ये पर्वत-सत्तमे ।[५७पू
क्षुधाऽऽर्त्तानां बिले क्[8]वाऽपि तृषाऽऽर्त्तानां तदा सताम्।[9] [N
N] भृशं शोक-परीतानाम् अहो-रात्र-गणा गताः ॥५॥ [५७उ
ते वयं कार्य-नैराश्यात् कालस्याऽति-क्रमेण च ।
N] भयाच् च कपि-राजस्य का[10]लाऽतिगम-शङ्कया ॥६॥ [५८
वि-चीय गि[11]रि-दुर्गाणि नदी-प्र[12]स्रवणानि च ।
N] अना-साद्य पदं देव्याः प्राणांस् त्यक्तुम् उप-स्थिताः। [N
२३उ] ततस् तस्य गिरेर् मूर्ध्नि वयं प्रायम् उपाऽऽ[13]स्महे ॥७॥ [N

---

१. आ—महाहरीन् । २ च रा ब म ल१ ल२ अ—०बलः ॥ ३. आ—०न । ४. म—दक्षिणां दिशमास्थाय प्रेतराजेन पालिताम्। ५ फ च रा प्र ब ल१ ल२ अ—नास्ति । ६. आ—सर्वे ते । फ अ—सर्वे वै । प्र ल१ ल२—त्वां देवि ॥ ७. फ—तु । अ—वै । ८. आ—कस्मिंस्तृषा० । ९ फ अ—क्षुभितानां निरासाना वने कस्मिंश्चिदासताम् ॥ १०. आ—कालान्तरविशं० ॥ ११. फ—गुल्दु० । १२. आ—प्रश्रा० ॥ १३. प्र ल१—उपस्थिताः ॥

